
संस्कृत
चन्दमामा
जुलै १९८५

# THE HERITAGE

A monthly magazine that satisfies your family's need for intelligent reading and good taste.



Dear Friend:

Every age in history had its own trends. One of the trends of our time is our eagerness to know much of many things.

As a response to this yearning there has been a magazine boom. Every now and then a new periodical is announced.

We too are bringing to you the news of a new English monthly, THE HERITAGE.

Is it to keep pace with this trend that we are launching THE HERITAGE?

Strange though it may sound, THE HERITAGE will set a new trend—you'll be proud of.

We who have worked hard for decades to give our young a clean and healthy reading fare, are now launching a magazine of sound values and enjoyable literature for your whole family, from January'85.

Eassys that stimulate your thinking, features that speak of many little-known aspects of Indian culture, stories and novels that are remarkable for human values and artistic merit, will make THE HERITAGE.

With over a hundred pages of variety, blended with colour and black-and-white pictures, THE HERITAGE will refuse to compromise with anything that is unworthy of you.

We address this letters to you, because we feel that you will be one of those who would like to see the success of such a magazine.

A year's subscription to THE HERITAGE cost Rs.72.00, but you can still enroll yourself or a friend of yours at the pre-launch price of Rs.60.00. Please send a M.O. or Demand Draft (drawn in favour of Dolton Agencies) To. **Dolton Agencies, Chandamama Buildings, Vadapalani, Madras-600 026.**

With best wishes,

*The Publishers.*

**From the publishers of Chandamama**

## THE HERITAGE

**It's worth preserving. Every issue of it.**



# चन्दमामा

जुलै – १९८५

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'

सञ्चालकः 'नागिरेड्डी'

संस्कृतं न केवलं कस्मिंश्चित् राज्ये, अपि तु समग्रे देशे अस्ति। विदेशेषु अपि जनाः एतस्याः भाषायाः अध्ययनं कुर्वन्ति। एतां प्रोत्साहयन्ति च। एवं विशालव्याप्तिः वस्तुतः एतस्याः भूषणायेत। किन्तु वस्तुस्थितिः एतद्विपरीतम् एव दृश्यते।

दरिद्राय कवये महाराजेन गजः दत्तः चेत् कवेः परिस्थितिः यथा भवेत् तथा अस्ति संस्कृतस्य परिस्थितिः। गजः बहूपकारी, सत्यम्। किन्तु गजस्य उपयोगं स्वीकर्तुम् इच्छतः कवेः तावत्सामर्थ्यं भवेत् किल? गजं पोषयितुं वा सः शक्नुयात् किल?

यदि वर्तमानपरिस्थितिः परिवर्तनीया तर्हि अस्माभिः संस्कृतज्ञैः सङ्घटितैः भाव्यम्। तेनैव शक्तिः सम्पादनीया च। सङ्घटनस्य अर्थः न केवलं संस्थास्थापनम्। सङ्घटनं सर्वदा कार्यार्थं स्यात्, न तु सङ्घटनार्थं सङ्घटनम्। सङ्घटनेन शक्तिः प्रवाहरूपतां प्राप्नुयात्।

सम्पुटः–२ जुलै-८५ सञ्चिका–४

प्रतिकृतिमूल्यम् रू. २/- वार्षिकं ग्राहकशुल्कम् रू. २४/-








# चन्दमामा प्रजल्पति

## उन्नतः गजः

खाट्मण्डूतः पञ्चकिलोमीटरदूरे नैर्ऋत्यदिशि शुक्लापाण्टा वन्यमृगालये प्रपञ्चे एव अत्युन्नतः गजः अस्ति इति 'भारतीय वन्य मृगनिधिः' सूचयति।

## मीनाः भाषन्ते

कश्चित् स्वीडन्संशोधकः मीनानां विषये दशवर्षात्मकं सुदीर्घसंशोधनं कृत्वा वदति यत् मीनानाम् अपि काचित् भाषा अस्ति, विविधान् लघुशब्दान् उत्पादयन्तः एते मीनाः परस्परं सम्भाषणं कुर्वन्ति इति।




## वृद्धानां भूमिः



सोवियत्रशियादेशे अजैरबैजान् प्रदेशे शतायवः १५०० जनाः सन्ति। तेषु श्रीमत्याः अल्लाभिय् रोवा महोदयायाः वयः १५० वर्षाणि। अस्मिन् वयसि अपि सा गृहकार्याणि सोत्साहं स्वयं कुर्वती द्विपटान् अपि सज्जीकरोति। तस्याः पुत्र्याः वयः १०४ वर्षाणि। सा अपि स्वस्था उत्साहिनी च।

# भवन्तः जानन्ति वा ?

१. भौतशास्त्रे नोबेल् पारितोषिकं द्विवारं केन प्राप्तम्?

२. रसायनशास्त्रे केन द्विवारं नोबेल् पारितोषिकं प्राप्तम्?

३. सोवियत्रशियानिवासिना केन प्रथमवारं नोबेल्पारितोषिकं प्राप्तम्?

४. 'मालिक्यूल्' इति वचनस्य निरूपकः शास्त्रवेत्ता कः?

५. मैकेल फेरडे यदा 'रायल्सोसैटि' निर्वाचने भागं गृहीतवान् तदा एकेन तद्विरुध्य मतं दत्तम्? तत् केन?

(उत्तराणि ६४ तमे पृष्टे)



# सम्माननयोग्यता

कस्मिंश्चित् ग्रामे प्रतापः नाम कश्चित् आसीत्। सः विद्यासु कलासु वा न प्रवीणः। तथापि तस्य महती कीर्तिः आसीत्। यतः सः कलाकाराणां कार्यक्रमान् आयोजयति स्म। प्राप्ते धने कञ्चन भागं आत्मनः उपयोगार्थं स्थापयति स्म। एवं च सः जनानां कलाकाराणां च प्रियः आसीत्।

एकदा प्रतापः केनचित् गायकेन सह चन्दनपुरं गतवान्। तत्र तस्य गायकस्य गानगोष्ठी आयोजिता। गानगोष्ठी उत्तमा आसीत्। तेन यथेष्टं धनम् अपि प्राप्तम्। कार्यक्रमानन्तरं सुगन्धः नाम कश्चित् अपरिचितः प्रतापं प्रति 'अद्य भवता गायकेन सह मम गृहम् आगन्तव्यम्' इति वार्ता प्रेषितवान्। 'सुगन्धः कश्चन कलाभिमानी स्यात्। अतः एव आह्वानं प्रेषितवान्' इति चिन्तितवान् प्रतापः।

अनन्तरं प्रतापः गायकेन सह सुगन्धस्य गृहं गतवान्। सुगन्धः गायकाय प्रतापाय च एकैकं सुवर्णपदकं दत्त्वा सम्मानितवान्, उक्तवान् च- "अद्य मया अपूर्वा गानसुधा आस्वादिता। एतादृशस्य गायकस्य सम्मानेन एव मम तृप्तिः। एतादृशं कार्यक्रमं यः आयोजितवान् सः अभिनन्दनार्हः" इति।

तदा प्रतापः उक्तवान्- "वयं तु धनसम्पादनार्थम् एतत्सर्वं कुर्मः। अत्र सम्माननस्य का प्रसक्तिः ?" इति।

"धनार्थं कृतं चेदपि कलायाः स्वत्वं न न्यूनीभवति किल ? कलाकारस्य सम्माननार्थम् अहं यत् अवकाशं प्राप्तवान् तत् मम सौभाग्यम् इति अहं चिन्तयामि" इति सुगन्धः विनयेन उक्तवान्।

एतदनन्तरं प्रतापः यस्य कस्यापि कलाकारस्य कार्यक्रमं यदि आयोजयति तर्हि तम्

"सुभद्रा"



अवश्यं चन्दनपुरम् आनयति स्म। एवं तेन शिल्पी, चित्रकारः कविः मल्लः च चन्दपुरम् आनीताः। ते तत्र स्वविद्याप्रदर्शनं कृत्वा सुगन्धद्वारा सुवर्णपदकं प्राप्तवन्तः।

सुगन्धस्य एतेन आचरणेन प्रतापस्य आश्चर्यं जातम्। यतः तेन नगरेषु उपनगरेषु च अटितम् आसीत्। किन्तु कुत्रापि सुगन्धसदृशः कलाकारसम्मानकारः एतावत्पर्यन्तं न दृष्टः।

अतः प्रतापः चिन्तितवान्- "कलामर्मज्ञस्य एतस्य परिचयः सर्वत्र कारणीयः" इति। अतः सः एतत्कार्ये चन्दनपुरस्य ग्रामप्रमुखस्य साहाय्यं प्रार्थितवान्। तदा ग्रामप्रमुखः उक्तवान्- "भवान् सुगन्धस्य एतावत् महत्त्वं किमर्थं ददाति? स तु महागर्वी। अतः वयं कदापि तस्य सहवासं न इच्छामः" इति।

ग्रामप्रमुखस्य वचने प्रतापस्य विश्वासः न उत्पन्नः। 'सर्वेषां कलाकाराणां सम्माननकर्ता कथं गर्वी भवितुम् अर्हति? प्रायः ग्रामप्रमुखस्य सुगन्धस्य च मध्ये कोऽपि मतिभेदः स्यात्। अतः एव ग्रामप्रमुखः तथा उक्तवान्' इति विचिन्त्य प्रतापः ग्रामीणान् अन्यान् एतद्विषये साहाय्यं कर्तुं प्रार्थितवान्। किन्तु ग्रामीणेषु कोऽपि सुगन्धस्य सम्माननविषये उत्साहं न प्रदर्शितवान्।

'सामान्यतः समीपस्थस्य वैशिष्ट्यविषये जनाः अनादरं प्रकटयन्ति। सुगन्धस्य विषये अपि एवं जातं स्यात्। अतः सुगन्धः एव एतद्विषये मुखतः प्रष्टव्यः" इति चिन्तितवान् प्रतापः। सुगन्धस्य गृहं गतवान् च।

गृहम् आगतं प्रतापं दृष्ट्वा पूर्ववत् एव स्वागतीकुर्वन् सुगन्धः आगमनकारणं पृष्टवान्। प्रतापः विनयपूर्वकम् पृष्टवान्- "भवादृशम् उदारं सज्जनम् अहं कुत्रापि न दृष्टवान्। मम मनसि एकः सन्देहः यत् कलायां विशेषरुचिं वहन् अपि किमर्थं भवान् कलानाम् अभ्यासं न कृतवान्?" इति।

सुगन्धः शान्तस्वरेण पृष्टवान्- "अहं कलाः न अभ्यस्तवान् इति भवन्तं कः उक्तवान्?"

इति।

प्रतापः उक्तवान्- "कोऽपि श्रेष्ठः कलाकारः स्वकलाप्रदर्शनं विना तूष्णीं स्थातुं न अर्हति। अतः मया तथा चिन्तितम्" इति।

"कलां ज्ञातुं कलामर्मज्ञाः आवश्यकाः इति तु सत्यं किल? किन्तु तादृशाः समर्थाः न सन्ति एव इति वक्तुं शक्यते। अतः अहं कलाप्रदर्शनं न करोमि। यदि भवान् इच्छति तर्हि मदीयाः कलाकृतीः प्रदर्शयामि" इति उक्त्वा सुगन्धः प्रतापं पार्श्वस्थं प्रकोष्ठं नीतवान्। तत्र सुगन्धस्य अमूल्यशिल्पकृतयः सङ्गृहीताः आसन्। भित्तिषु विविधचित्राणि लिखितानि आसन्। एतत्सर्वं दृष्ट्वा प्रतापः स्तम्भितः।



प्रकोष्ठतः बहिः आगतः सुगन्धः मधुरं गातुम् आरब्धवान्। तस्य गानमाधुर्येण प्रतापः नितराम् आकृष्टः। यदा गानं समाप्तं तदा प्रतापः सन्तोषेण उक्तवान्- "महानुभाव! अहं भाग्यशाली अस्मि। दैववशात् एव भवतः दर्शनार्थम् अवकाशं प्राप्तवान्" इति।

सुगन्धः मन्दहासपूर्वकम् उक्तवान्- "अहं बाल्ये एव सर्वम् अभ्यस्तवान्। षोडशे वयसि कलाप्रावीण्यं प्राप्तवान्। गृहस्य उद्यानम् एव मम श्रोता प्रेक्षकः च। तत्रैव अहं मम कलाप्रदर्शनं करोमि। अहं कवितारचनाम् अपि जानामि, युद्धविद्याम् अपि जानामि। किम् अधिकं वक्तव्यम्? चतुःषष्टिकलाः अपि मया अभ्यस्ताः" इति।

"भवान् तु अद्वितीयः। भवतः परिचयः सर्वत्र भवेत्। भवन्तम् अहं राजधानीं नेष्यामि। महाराजस्य पुरतः भवतः कलाप्रदर्शनार्थं व्यवस्थां करिष्यामि। महाराजः स्वयं भवतः सम्माननं करिष्यति" इति हर्षगद्गदः प्रतापः उक्तवान्।

"अहं साधारणजनानां पुरतः मम कलाप्रौढिमां न प्रदर्शयामि। मम सम्माननं कर्तुम् अर्हः कोऽपि अस्मिन् जगति नास्ति। अतः अहं कस्यापि सम्माननं न इच्छामि" इति सुगन्धः साभिमानम् उक्तवान्।

तदा आश्चर्यचकितः प्रतापः पृष्टवान्-

''भवता येषां सम्माननं कृतं तेषु कोऽपि भवतः योग्यताविषये न पृष्टवान्। 'भवतः योग्यता अस्ति वा न वा' इत्यपि तैः न चिन्तितम्। एवं स्थिते कश्चित् भवतः सम्माननं कर्तुम् यदि इच्छति तर्हि किमर्थं भवान् तस्य योग्यताविषये चिन्तयति? एतत् न्याय-सङ्गतं न'' इति।

सुगन्धः सदर्पं हसन् उक्तवान्- ''सर्वेषां कलाकाराणां सम्माननं कर्तुं मम योग्यता अस्ति। किन्तु मम सम्माननं कर्तुं योग्यः कोऽपि नास्ति'' इति।

प्रतापः मौनं स्थितवान्। सुगन्धः पुनः उक्तवान्- ''पार्श्वनगरं कश्चित् वीणावादकः आगतः अस्ति। तस्य नाम वामनमूर्तिः इति। अहं तस्य सम्माननं कर्तुम् इच्छामि। यदि इच्छति तर्हि भवान् अपि आगच्छतु'' इति।

प्रतापः अपि सुगन्धेन सह वीणावादकं वामनमूर्तिं द्रष्टुं गतवान्। सुगन्धः विनम्रतया तदीयसम्मानस्य इच्छां प्रकटितवान्। तदा वामनमूर्तिः सुगन्धं नखशिखान्तं पश्यन् पृष्टवान्- ''भवान्! मम सम्माननं करोति? तदपि सङ्गीतकलायाम्! एतत् हास्यास्पदम्। वीणावादनविषये भवान् किं जानाति? मां सम्मानयितुम् इच्छतः भवतः का योग्यता?'' इति।

सुगन्धः शिरः अवनमय्य क्षणकालं मौनं स्थितवान्। अनन्तरं ततः निर्गतः च। प्रतापः तम् अनुसृतवान्। मार्गे प्रतापः सुगन्धम् उक्तवान्- ''भवतः दर्शनं मया सौभाग्येन प्राप्तम् उत दौर्भाग्येन इति अहं न जानामि। एतत् तु स्पष्टं यत् भवान् असाधारण-प्रतिभासम्पन्नः। किन्तु अहङ्कारकारणतः भवान् अन्यसम्माननस्य अधिकारतः वञ्चितः अस्ति। यः योग्यताविहीनः तस्य सम्मानन-विषये चिन्तनं नाम तत् मूर्खतायाः विषयः'' इति।

एतदनन्तरं प्रतापः कदापि सुगन्धेन न मिलितवान्।






## ६, ७

[नद्यां पतितः चन्द्रवर्मा दैवबलात् तीरं प्राप्तवान्। सुबाहोः का गतिः इति तेन न ज्ञातम्। तीरप्रदेशे अरण्ये कालनागः नाम सर्पः तस्य उपरि आक्रमणं अकरोत्। तत्समये तत्र उपस्थितया कापालिकया एषा आपत् दूरीकृता। कापालिका एतस्य साहाय्यं याचितवती। 'शतयोजनदूरे शङ्खनामकः मान्त्रिकः अस्ति। तत्समीपे किञ्चन वस्तु अस्ति। तत् आनीतं चेत् अहं चिरयौवनं प्राप्नोमि। अनन्तरम् अवश्यं भवतः साहाय्यं करिष्यामि' इति उक्तवती सा। किन्तु चन्द्रवर्मणः चिन्ता-'राज्यस्य धीरमल्लस्य इत्यादीनां का गतिः?' इति। अतः कापालिका स्वपुरतः स्थितं गोलकं मन्त्रदण्डेन ताडितवती। तत्र चन्द्रवर्मणा भूतं वर्तमानं च दृष्टम्। ततः ....]

अग्निना ज्वाल्यमानं, धूमेन आवृतं, इतस्ततः धावतां जनानां हाहाकारैः पूर्णं, तत् वीरपुरं दृष्ट्वा चन्द्रवर्मा वेदनया आक्रन्दनं कृतवान्- "कापालिके! एतत् घोरदृश्यं द्रष्टुं न शक्नोमि, स्थगयतु एतत्" इति। कापालिका मन्त्रदण्डेन गोलकं स्पृष्टवती। तत् घोरदृश्यम् अदृश्यतां गतम्।

"इदानीं सेनापतिं धीरमल्लं पश्यतु भवान्" इति उक्त्वा कापालिका पुनः मन्त्रदण्डेन गोलकं स्पृष्टवती।

चन्द्रवर्मा कुतूहलेन दृष्टवान्। दुर्गमे पर्वतप्रदेशे धीरमल्लः सैनिकैः सह गच्छन् अस्ति। क्षणकाले एव परितः आगतया शत्रुसेनया सः आवृतः अभवत्। तदा धीरमल्लः प्राणानाम्



आशां त्यक्त्वा युद्धं कर्तुम् आरब्धवान्।

"एतत्सर्वम् अद्य प्रातः प्रवृत्तम्। इतःपरं धीरमल्लेन का गतिः प्राप्ता इति तु दर्शनयोग्यं न" इति उक्त्वा कापालिका तत् दृश्यं निवारितवती। चन्द्रवर्मा एतत्सर्वं दृष्ट्वा दिङ्मूढः जातः। सः शिरसि हस्तं स्थापयित्वा चिन्तामग्नः अभवत्।

चन्द्रवर्मणः स्कन्धे हस्तं स्थापयन्ती कापालिका उक्तवती– "पुत्र! गतं न शोचयेत् प्राज्ञः। धीरः भवतु। क्षत्रियः कदापि धैर्यच्युतः न भवति। दुःखं न शाश्वतम्। भवान् राज्यं पुनः प्राप्नोति इति मम दृढः विश्वासः अस्ति। इदानीं भवान् यदि माम् उपकरोति तर्हि अहम् अपि साहाय्यं करिष्यामि" इति।

परन्तु तस्याः वचनेन चन्द्रवर्मणः मनसि उत्साहः न उत्पन्नः।

"शतयोजनदूरं गमनम् एव दुष्करम्। तत्रापि मान्त्रिकसमीपात् किञ्चन वस्तु आनेतव्यम्। एतादृशे दुष्करे प्रयत्ने यदि अहं सफलः भविष्यामि तर्हि एषा कापालिका साहाय्यं कुर्यात्। यदि मार्गे एव कुत्रापि मरणं प्राप्नोमि चेत्?" इत्यादि सन्देहैः व्याकुलः अभवत् चन्द्रवर्मा।

एतत् ज्ञातवती इव कापालिका मन्दहासं प्रकटयन्ती उक्तवती- "पुत्र! भवतः मनसि उत्पन्नान् सन्देहान् अहं जानामि एव। इदानीम् इतः भवान् गन्तुम् एव इच्छति चेत् वदतु। सुरक्षितं प्रेषयामि। भवति विश्वस्य भवन्तम् अत्र आनीतवती। यदि इच्छति तर्हि अद्य एव प्रेषयामि। किमर्थं मयि वृथा सन्देहः?" इति।

इतः गतं चेत् कुत्र गन्तव्यं चन्द्रवर्मणा? न पितुः आश्रयः, न वा राज्यं, न हि मित्राणि। पुनरपि कुत्रापि अटव्याम् अटनम् एव किल? अतः चन्द्रवर्मा निश्चितवान्- 'यत्किमपि भवतु, कापालिकायाः साहाय्यकरणम् एव उचितम्' इति।

सः कापालिकाम् उक्तवान्- "कापालिके! पूर्णमनस्कतया अहं भवत्याः साहाय्यम् आचरामि। मान्त्रिकगृहतः मया किं वस्तु



आनेतव्यम्' इति वदतु। प्राणान् पणीकृत्य अहम् आनेष्यामि'' इति।

चन्द्रवर्मणः वचनेन कापालिका बहु सन्तुष्टा। सा आसनात् उत्थाय भित्तिपार्श्वे स्थितां काष्ठमूर्तिं मन्त्रदण्डेन ताडयित्वा उक्तवती- ''भैरव! अतिथिः आगतः अस्ति। षड्रसोपेतं भोजनम् एतत्क्षणे एव आनयतु'' इति।

तदा कश्चन महान् हुँकारः श्रुतः। भीमकायः कश्चन प्रत्यक्षीभूय विविधखाद्यपदार्थान् आनीय तस्याः पुरतः स्थापितवान्। खाद्य-दर्शनेन चन्द्रवमर्णः बुभुक्षा द्विगुणिता। तदा कापालिका तम् उक्तवती- ''पुत्र, भवान् इदानीं मम अतिथिः। अतः मया दीयमानम् आतिथ्यं निस्सङ्कोचतया स्वीकरोतु'' इति। कापालिकायाः सूचनानुसारं सः यथेष्टं भोजनं कृतवान्। पानीयं पीतवान् च। अनन्तरं तृप्तिं प्रकटयन् भैरवेण आनीतेन जलेन तत्रैव हस्तं क्षालितवान्।

भोजनसमये तस्य पुनः सन्देहः- ''एवं महाशक्तिशालिषु भैरवादिषु विद्यमानेष्वपि किमर्थम् एषा मान्त्रिकसमीपतः अपेक्षितं वस्तु प्राप्तुं न शक्नोति? मादृशस्य अल्पस्य साहाय्यं किमर्थम् इच्छति? अत्र कापि वञ्चना स्यात् वा? मादृशं क्षत्रियं बलिं दातुम् एतया एवम् उपायः कल्पितः स्यात् वा?'' इति। 'काश्चन दुष्टशक्तयः बलिम् इच्छन्ति। अतः दुष्टाः कापालिकाः मुग्धान् क्षत्रिययुवकान् वञ्चयित्वा, तेषां बलिं दत्त्वा दुष्टशक्तीः वशी-कुर्वन्ति' इति सः श्रुतवान् आसीत्।

भोजनानन्तरं कापालिका पुनः उक्तवती-

''पुत्र चन्द्रवर्मन्! मान्त्रिकस्य गृहे अपूर्वशक्तिशाली शङ्खः अस्ति। कस्यचित् सस्यमूलस्य रसं तच्छङ्खद्वारा पिबामः चेत् वार्धक्यं नश्यति, पुनरपि यौवनं प्राप्यते। पुनः सहस्रवर्षपर्यन्तं वार्धक्यभीतिः न भविष्यति। इतः सहस्रवर्षेभ्यः पूर्वं मया तच्छङ्खद्वारा सस्यमूलरसः पीतः आसीत्। तदानीं मान्त्रिकः मम विरोधी न आसीत्। अनन्तरकाले आवयोः विरोधः उत्पन्नः''

इति वदन्ती सा अकस्मात् पृष्ठतः दृष्टवती। भैरवः तत्र एव आसीत्। सर्वं रहस्यं कुतूहलेन श्रुण्वन्तं तं कोपेन पश्यन्ती- "नीच! किम् एतत् औद्धत्यं भवतः? रहस्यं श्रृणोति वा?" इति उक्त्वा मन्त्रदण्डेन तस्य शिरसि ताडितवती। सः वेदनया आक्रन्दनं कुर्वन् काष्ठमूर्तिरूपतां प्राप्तवान्।




कापालिकायाः कार्येण चन्द्रवर्मणः विस्मयः सञ्जातः। भैरवः एतावान् विनयशीलः, सज्जनः इव दृश्यते। तथाऽपि कापालिका तं किमर्थं दण्डयति इति तस्य मनसि संशयः उत्पन्नः। अतः कापालिकां "एषः भवत्याः सेवकः किल? किमर्थं तम् एवं कठोरं दण्डयति? कः अपराधः कृतः तेन?" इति पृष्टवान् चन्द्रवर्मा।

विकटं हसन्ती कापालिका "यद्यपि एषः मम सेवकः, तथापि न विश्वासार्हः। समये प्राप्ते मम रहस्यं ज्ञात्वा मां मारयित्वा शङ्खमान्त्रिकसमीपं गन्तुम् इच्छति एषः। एतेषां तुच्छभूतानां सह वा सः एवम् एव। बलिष्ठस्य आश्रयं प्राप्तुं ते सदा प्रयत्नशीलाः भवन्ति। अतः एव एतं काष्ठरूपेण परिवर्त्य स्थापितवती अस्मि। तेन दुष्टमान्त्रिकेण मम रहस्यं ज्ञातुं बहवः प्रेषिताः आसन्। तेषां सर्वेषां गतिं पश्यतु भवान्" इति वदन्ती तोरणे स्थितान् कपालान् चन्द्रवर्मणे प्रदर्शितवती।

कपालान् दृष्ट्वा चन्द्रवर्मा आश्चर्यचकितः भीतः च। एवं महादुष्टान् जेतुम् एतस्याः शक्तिः स्यात् इति तस्य कल्पना अपि न आसीत्। कापालिकायाः शक्तिं ज्ञात्वा मनसि एव साधुवचनं उक्तवान्। "मान्त्रिकेण प्रेषितानां कपालाः यथा अत्र तोरणम् अलङ्कुर्वन्ति तथैव एतया प्रेषितानां कपालाः किं तस्य मान्त्रिकस्य कण्ठम् अलङ्कुर्युः? एवं चेत् इदानीं तस्य समीपं प्रस्थितस्य मम गतिः का भविष्यति? इति चिन्तयतः चन्द्रवर्मणः शरीरे रोमाञ्चः उत्पन्नः।

"अये कापालिके! अहम् इव इतः पूर्वं भवत्या अन्येऽपि केचन प्रेषिताः स्युः किल?




तेषां कपालाः इदानीं मान्त्रिकस्य कण्ठम् अलङ्कुर्वन्ति किल?'' इति साक्षात् पृष्टवान् चन्द्रवर्मा।

कापालिका तत् शिरश्चालनपूर्वकं निराकुर्वती–''अद्यावधि मया कोऽपि न प्रेषितः। अपूर्वं तं शङ्खं आनेतुं कः समर्थः इति अहं सुस्पष्टं जानामि। एवं स्थिते तत् महत्कार्यं साधयितुं यं कमपि अहं कथं प्रेषयामि?'' इति पृष्टवती।

''एवं तर्हि एतत्कार्यार्थम् अहम् एव समर्थः इति किल भवत्याः अभिप्रायः?'' इति पृष्टवान् चन्द्रवर्मा।

''भवता युक्तम् एव पृष्टम्। तरुणः क्षत्रियकुमारः साहसी, सर्वकार्यार्थम् सिद्धः, भवादृशः अन्यः कः अस्ति लोके? अस्मिन् प्रयत्ने भवान् निश्चयेन सफलः भविष्यति इति मम विश्वासः अस्ति। तदनन्तरं भवान् किं राजा चक्रवर्ती एव भविष्यति। तदर्थं कः मार्गः इति इदानीम् अहं न वदामि। अपूर्वशङ्खस्य आनयनानन्तरम् एव तदर्थं मार्गं सूचयिष्यामि' इति कापालिका उक्तवती।

कापालिकायाः वचनेन चन्द्रवर्मणः उत्साहः प्रवृद्धः। तथापि 'तं महत्वपूर्वं शङ्खम् अहम् आनेतुं शक्नोमि वा न वा' इति सन्देहः तस्य मनसि आसीत् एव। एवं स्थिते अपि सः सधैर्यम् उक्तवान्- ''अस्तु तावत्, मान्त्रिकस्य निवासः कुत्र अस्ति? तत्र गन्तुं कः मार्गः? मार्गं सूचयति चेत् इदानीम् एव अहं प्रस्थितः'' इति उक्तवान् चन्द्रवर्मा।

'तर्हि मया सह आगच्छतु' इति उक्त्वा कापालिका तं गृहात् बहिः नीतवती। तत्र उत्तरदिशं प्रदर्शयन्ती उक्तवती- ''अस्यां दिशि शतयोजनदूरे एकः पर्वतः अस्ति। तस्य पर्वतस्य उपरि मान्त्रिकस्य गृहम् अस्ति। गृहस्य अन्तः पूजागृहे मया पूर्वम् उक्तः अपूर्वशक्तिशाली शङ्खः क्रूरसर्पस्य कण्ठे उत्तोलितः अस्ति। सर्पः च भित्तौ आणिम् आश्रित्य तिष्ठति। तस्य मान्त्रिकस्य स्नेहं सम्पाद्य वा, तं मारयित्वा वा कथञ्चित् भवता

स: शङ्खः आनेतव्यः। समयानुगुणम् उपायान् विचिन्त्य भवान् कार्यं साधयतु" इति।

"तादृशं महामान्त्रिकम् अहं नाशयितुं शक्नोमि वा?" इति पृष्टवान् चन्द्रवर्मा।

"किमर्थं न शक्यते? सर्वेषां मरणं कदाचित् भवेत् एव किल? मान्त्रिकः अपि कदाचित् मरणं प्राप्नुयात् एव। तस्य मारणं कथम् इति भवान् सन्दर्भानुगुणं स्वयं ज्ञास्यति। तदर्थं अपेक्षितां शक्तिम् अपि भवान् प्राप्स्यति। अत्र सन्देहः एव मास्तु" इति उक्तवती कापालिका।



कापालिकायाः वचनं श्रुत्वा चन्द्रवर्मा मनसि एव चिन्तितवान्– 'मान्त्रिकस्य वधः ममद्वारा करणीयः इति भगवता निश्चितं स्यात्। अतः एव कापालिका एतत् कार्ये मां नियोजयन्ती अस्ति। यदि भगवतः इच्छा एव एवम् अस्ति तर्हि कथम् अहं तत् निराकर्तुं शक्नोमि? अतः यत्किमपि भवतु, फलाफलं तु दैवाधीनम्' इति सः निश्चितवान्।

एवं मनसि निश्चयं कृत्वा सः 'एवं तर्हि अहं प्रस्थितः' इति उक्त्वा ततः प्रस्थितः।

यावत् सः अग्रे न गतवान् तावति काले कापालिका तस्य स्कन्धस्य उपरि हस्तं स्थापयित्वा उक्तवती- "मया प्रमुखः कश्चन विषयः न उक्तः। मन्त्रिकस्य समीपे कश्चन विचित्रः पक्षी अस्ति। तस्य शक्तिः वा, वेगः वा अपरिमितः। तदीयं नाम अग्निपक्षी इति। सः पक्षी प्रतिदिनं सूर्यास्तानन्तरं आहारान्वेषणार्थं गत्वा मध्यरात्रे प्रत्यागमिष्यति। उड्डयनसमये तस्य मुखतः अग्निज्वाला निर्गच्छति। एतं पक्षिणम् अनुसरन् भवान् सुलभतया मान्त्रिकस्य गृहं प्राप्स्यति। आहत्य द्विशतयोजनदूरं यावत् भवतः प्रयाणं किल? तावत् दूरं गत्वा कार्यं सम्पाद्य, एवं तर्हि भवान् कदा प्रत्यागन्तुं शक्नोति?" इति।

प्रत्युत्तरं किं वक्तव्यम् इति चन्द्रवर्मा न ज्ञातवान्। नदीः पर्वतान् अरण्यानि च तीर्त्वा शतयोजनदूरं गन्तव्यम्। तत्र उपायेन मान्त्रिकसमीपतः शङ्खः वशीकरणीयः। पुनः

शतयोजनदूरं प्रत्यागमनार्थं सञ्चारः करणीयः। मार्गे के के अपायाः सम्भवेयुः? इति तु न ज्ञायते। एवं स्थिते कथं वा प्रत्यागमनस्य अवधिः वक्तुं शक्यते?

चन्द्रवर्मणः विचारं ज्ञातवती इव कापालिका कम्पमानस्वरेण उक्तवती- "पुत्र चन्द्रवर्मन्! भवता करणीयस्य कार्यस्य महत्त्वम् अहं जानामि एव। किन्तु इतः एकवर्षाभ्यान्तरे भवता शङ्खः आनीय दीयते चेदेव मम प्रयोजनम्। एकदिनात्मकेन विलम्बेन अपि सर्वनाशः भविष्यति। यदि एकवर्षानन्तरं भवान् अत्र आगमिष्यति, तर्हि अत्र मम दर्शनं न भविष्यति।

तथापि भवते दत्तं वचनं न विस्मरामि। गोलकस्य समीपे तालपत्रे सर्वं लिखित्वा गमिष्यामि। तस्य शङ्खस्य उपयोगः कथं करणीयः? इति विषयः तत्र उल्लिख्यते" इति।

एतेन वचनेन चन्द्रवर्मणः मनसि विश्वासः उत्पन्नः। 'एषा कापालिका मां न वञ्चयति' इति तस्य मनसि निश्चयः जातः। अतः सः कापालिकायाः हस्तद्वयं स्वहस्ते गृहीत्वा "एकवर्षाभ्यन्तरे अहं निश्चयेन तं शङ्खम् आनेष्यामि। भवती निश्चिन्ता भवतु" इति उक्त्वा ततः प्रस्थितः।

कापालिका 'कालनाग!' इति उच्चैः आहूतवती। कालनागः सर्पः फूत्कारं कुर्वन् समीपम् आगत्य स्थितवान्। सर्पाय चन्द्रवर्माणं प्रदर्शयन्ती कापालिका- "अरण्यसीमापर्यन्तम् एतस्य रक्षणे तिष्ठन् एतं प्रेषयित्वा आगच्छतु' इति आज्ञापितवती।

कालनागः उत्प्लुत्य गच्छन् मार्गं प्रदर्शितवान्। चन्द्रवर्मा सर्पम् अनुसृत्य गच्छन् पृष्ठतः परिवृत्य दृष्टवान्।

कापालिकाया गुहायाः द्वारस्य स्थाने इदानीं तेन महाशिरस्कः पक्षसहितः सिंहशरीरकः भयङ्करः विकृताकारः दृष्टः।

(अनुवर्तते)






# दयालुः दयानन्दः

'अस्मिन् अवसरे समाधातुम् अशक्याम् अत्यन्तजटिलसमस्याम् उपस्थापयामि, तेन शठः सः त्रिविक्रमः अवश्यं पराजयं प्राप्स्यति' इति चिन्तयन् वेतालः कथां कल्पयन् आसीत्। तदा त्रिविक्रमराजः तत्र आगत्य, शवम् अधः अवतार्य, स्वीयस्कन्धे आरोप्य श्मशानं प्रति मौनं प्रस्थितवान्। शवान्तर्गतः वेतालः उक्तवान्- ''भोः महाराज, भवान् अपारदया-गुणवान् अस्ति। भवतः उत्तमगुणस्य दुर्लभं प्राप्तुम् इच्छन् कश्चित् भवता एतादृशकार्यं कारयन् अस्ति इति मन्ये। मानवानां गुणेषु दयागुणः श्रेष्ठः इति तु सत्यम्। किन्तु दयागुणस्य अयुक्तवितरणम् अनर्थाय भवति। एतस्य उदाहरणरूपेण दयानन्दनामकस्य धनिकस्य कथां वदामि। कथाश्रवणेन मार्गा-यासः न्यूनः भवति खलु ?''

एवम् उक्त्वा वेतालः एकां कथां कथित-

## वेतालकथा



वान्- ''कस्मिंश्चित् नगरे दयानन्दनामकः महाधनिकः आसीत्। अन्वर्थनामकः सः दयापरः। अपराधिजनानां विषये अपि सः क्षमागुणम् एव अवलम्बते। किञ्च सः अपराधी किमर्थं तम् अपराधं कृतवान् इति समालोच्य तस्य अपराधिनः स्वभावपरिवर्तनं कर्तुं प्रयत्नं करोति स्म च।

तादृशस्य दयानन्दस्य गृहे रामः इति कश्चन सेवकः आसीत्। सः बाल्यात् आरभ्य दयानन्दस्य गृहे एव वर्धितः। अतः अन्येषां कर्मकराणाम् अपेक्षया रामस्य विषये दयानन्दस्य विशेषवात्सल्यम् अ भि मा न श्च आसीत्। यदा रामः प्रौढः जातः, तदा तस्य विवाहः अभवत्।

पत्न्याः उपरि रामस्य महती प्रीतिः आसीत्। अतः सः स्वीयविषयान् सर्वान् तां वदति स्म। कदाचित् यजमानस्य गुणगानं करोति। अन्यदा तस्य प्रीतिवात्सल्यादीनां वर्णनं करोति। सः बहुविधान् उपकारान् कृतवान् इति श्लाघते पुनः कदाचित्।

रामस्य पत्नी तु दुराशापिशाचग्रस्ता आसीत्। एकदा सा रामं-''भवान् सर्वदा यजमानस्य गुणान् एव वर्णयति। यजमानस्य गृहे अनेकाः कौशेयशाटिकाः सन्ति इति वदति। मम समीपे एकापि तादृशी शाटिका अस्ति वा? आभरणानि सन्ति वा? एतत् सर्वं भवान् न जानाति वा? केवलं तेषां ऐश्वर्यदर्शनेन अस्माकं कः लाभः?'' इति पृष्टवती।

पत्न्याः वचनं श्रुत्वा रामः किञ्चित् जागरितः इव। तस्याः वचनं युक्तम् एव अस्ति इति सः चिन्तितवान्। किन्तु सः स्वभावेन एव अल्पतृप्तः आसीत्।

यजमानस्य समीपे अन्ये अपि अनेके कर्मकराः आसन्। रामः तान् दृष्ट्वा पत्न्याः वचनानि निवेदितवान्। तदा ते कर्मकराः तम् एव भर्त्सयन्तः ''रे राम, एतत् अणुसदृशं विषयं पर्वतरूपं करोति? अस्माकं कर्मानुसारिणी सम्पत्तिः लभ्यते। यजमानः सुखं जीवति चेत् अस्माकम् अपि कल्याणं भवति। अस्माकं

यजमानसदृशः दयापरः अन्यत्र कुत्रापि नास्ति। तत्रापि भवतः विषये यजमानस्य अत्यधिकप्रीतिः अस्ति। तादृशं यजमानं प्रति द्रोहचिन्तनं मास्तु" इति उपदिष्टवन्तः।

तदपि सत्यमेव इति भावितवान् रामः। पत्नीसमीपं गत्वा तम् एव विषयम् उक्तवान्। तदा सा "एवं हि सति भवान् अत्रैव तिष्ठति चेत् कदापि किञ्चिदपि वृद्धिः नैव भवेत्। तदपेक्षया एतम् उद्योगं त्यक्त्वा भवतः यजमानवत् भवान् अपि स्वीयम् उद्योगं करोति चेत् अधिकः लाभः भवेत्। सः निवारयेत् इति भयं वा? एतादृशभीरुजनाः कदापि उन्नतिं न प्राप्स्यन्ति?" इति उक्तवती।



"मम तु तावत् कौशलं नास्ति किल?" इति पृष्टवान् रामः। "एवं तर्हि चौर्यं करोतु। अनेके जनाः तदपि कुर्वन्ति" इति उक्तवती दुराग्रहग्रस्ता पत्नी।

चौर्यशब्दं श्रुत्वा रामः अतीव भीतः। चौर्यं कथं करणीयम्? कुत्र करणीयम्? इति चिन्तयन् सः दिङ्मूढवत् स्थितवान्। तदा तस्य पत्नी "किमर्थम् एवं चित्रलिखितवत् स्थितवान्? मनः दृढम् अस्ति चेत् चौर्यं अतिसुलभम्। तदर्थम् अन्यत्र कुत्रापि न गन्तव्यम्। भवतः यजमानस्य गृहे एव चौर्यं करोतु। भवतः विषये तस्य महान् विश्वासः अस्ति एव। तस्य गृहे भवतः कृते सर्वत्र प्रवेशावकाशः अस्ति। यत् किमपि बहुमूल्यं वस्तु अपहृत्य आगच्छतु। तत् विक्रीय, तेन धनेन देशान्तरे स्थित्वा किमपि वाणिज्यं कुर्मः। तदा अहम् अपि यथेच्छं वस्त्राभरणानि प्राप्तुं शक्नोमि। मम सन्तोषेण भवान् अपि आनन्दितः भवति खलु?" इति उक्तवती।

तस्याः वचनं रामः तदानीं न अङ्गीकृतवान्। किन्तु पुनः पुनः पत्न्याः भर्त्सनयुक्तवचनानि श्रुत्वा सः चौर्यार्थं मनः दृढीकृतवान्। अवकाशं प्रतीक्षमाणः आसीत् च। एकस्मिन् दिने सः दयानन्दस्य गृहे तत्र तत्र पश्यन् यदा अटति स्म, तदा अकस्मात् उद्घाटितां लोहपेटिकां दृष्टवान्। सः सूक्ष्मदृष्ट्या परितः

दृष्ट्वा तं निर्जनप्रदेशं ज्ञात्वा पेटिकातः एकं धनस्यूतम् अपहृत्य, शीघ्रं गृहम् आगत्य पत्न्याः हस्ते दत्तवान्। तस्य पत्नी स्यूतं दृष्ट्वा सन्तोषेण- "अहो ! प्रभूत धनम् अस्ति।" इति वदन्ती पुनः पुनः धनं गणयितुम् आरब्धवती।

परेद्युः पेटिकातः धनस्यूतस्य चौर्यं जातम् अस्ति इति दयानन्दः लक्षितवान्। तत् दृष्ट्वा सः- "एतत् कार्यम् अपरिचितचोरेण नैव कृतम्" इति मनसि एव समालोचयन्, सर्वान् कर्मकरान् समाहूय चौर्यविषयम् उक्त्वा "भवत्सु एव कश्चित् एतत् चौर्यं कृतवान्। अत्र दोषः मम एव स्यात्। मद्विषये भवतां विश्वासः नष्टः इति प्रतीयते" इति उक्तवान्। तस्य नेत्रद्वयम् अश्रुभिः आर्द्रं जातम्।

वस्तुतः यत्र कुत्रचित् चौर्यं भवति चेत्, गृहस्य यजमानः सेवकानां विषये संशयं प्रकटयति, कुप्यति, तान् भर्त्सयति, ताडयेत् च अपि। किन्तु अत्र स्वयम् एव दुःखम् अनुभवन्तं यजमानं दृष्ट्वा सेवकाः चकिता अभवन्। तस्य विषये तेषां भयभक्तिगौरवादयः द्विगुणिताः।

तदा सेवकेषु द्वौ यजमानं नमस्कृत्य "आर्य, आवां गत्वा सर्वेषां सेवकानां गृहेषु अन्वेषणं कृत्वा आगच्छावः। तावत्पर्यन्तं सर्वे अत्रैव तिष्ठन्तु" इति उक्त्वा अन्वेषणार्थं प्रस्थितौ। तथा अन्वेषणसमये धनस्यूतः रामस्य गृहे लब्धः। इतः परं मम का गतिः



इति चिन्तया रामः नखशिखान्तं कम्पितः।

अनन्तरं दयानन्दः रामम् एकान्ते आहूय "राम, भवान् किमर्थं चौर्यं कृतवान्? भवते आवश्यकवस्तूनि सर्वाणि अहं ददामि किल? मया या कापि न्यूनता आचरिता वा?" इति दुःखेन पृष्टवान्।

रामः तस्य पादयोः उपरि पतित्वा क्षमां याचितववान्। दयानन्दः तस्मै क्षमदानं दत्त्वा "तदर्थं चिन्ता मास्तु। गच्छतु, एतादृशकार्यम् इतःपरं कदापि न करोतु" इति तं सान्त्वयन् प्रेषितवान्।

तदनन्तरं रामः पुनः कदापि यजमानस्य गृहे चौर्यं न कृतवान्। किन्तु तत्र जीवनयापनम् अतीव दुस्तरं जातम्। एकत्र धनं धनम् इति पत्नी सर्वदा पीडयति। अन्यत्र यजमानगृहे अन्ये सेवकाः चोरः चोरः इति निन्दन्तः कुत्सितदृष्ट्या पश्यन्ति।

अतः एकस्मिन् दिने रामः दयानन्दस्य समीपं गत्वा "आर्य, अस्मिन् गृहे सर्वे मां संशयदृष्ट्या पश्यन्ति। अतः अहम् अन्यत्र कुत्रचित् गमिष्यामि" इति उक्तवान्।

तदा " कोऽपि किमपि कुत्सितवचनं यथा न वदेत्, तथा व्यवस्थां करोमि। भवतः पत्न्याः कृते एकां कौशेयशाटिकां ददामि" इति उक्त्वा रामं समाश्वासयन् "भवान् अत्रैव तिष्ठतु। तदेव वरम्। अन्यत्र गच्छति चेत्, महान् क्लेशः भविष्यति। बाल्यात् आरभ्य भवान् अत्रैव अस्ति। अतः भवद्विषये मम विशेषवात्सल्यम्





अस्ति। इतः परं अपि भवान् गन्तुम् एव इच्छति चेत्, मम एव कोऽपि दोषः स्यात् इति सन्देहः भवति। इतःपरं निर्णयः भवदधीनः'' इति उक्तवान्।

एतावता अपि रामः आग्रहं न त्यक्तवान्। तदा दयानन्दः तस्य हस्ते किञ्चित् धनं दत्त्वा ''अस्तु, भवान् यत्र कुत्रापि गच्छतु। सुखं जीवतु इत्येव मम आशा'' इति उक्तवान्। रामः ततः निर्गतवान्।

दयानन्दस्य पत्नी जातां वार्तां ज्ञात्वा पतिं ''यदा रामेण कृतं चौर्यं ज्ञातं तदा सः धनस्यूतः तस्मै एव दातव्यः आसीत्। तदा भवद्विषये तस्य अभिमानः वर्धते स्म। सत्यं खलु?'' इति पृष्टवती।

''एवं क्रियते चेत्, प्रतिदिनम् एकैकः सेवकः चौर्यं कुर्यात्। चोरेण अपहृतं धनं तस्मै एव बहुमानरूपेण देयम् इति एषः उत्तमः सम्प्रदायः न भवति'' इति उक्तवान्।

अनन्तरं अनेकानि वर्षाणि अतीतानि। दयानन्दः वृद्धः जातः। तस्य पुत्रः पितुः वाणिज्यव्यवहारादिकं निर्वहति स्म।

एकस्यां रात्रौ मार्कि विंशतिवर्षीयः एकः युवकः दयानन्दस्य गृहे चौर्यं कर्तुं प्रयत्नं कुर्वन् बन्धितः। तदा सः दयानन्दस्य पादयोः पतित्वा ''आर्य, क्षम्यताम्। भवतः गृहे पूर्वं रामः इति सेवकः आसीत् किल, तस्य पुत्रः अस्मि अहम्'' इति उक्तवान्।

दयानन्दः आश्चर्येण रामस्य वार्तां पृष्टवान्।

दयानन्देन धनं गृहीत्वा इतः गतः रामः शाकानां वाणिज्यम् आरब्धवान् आसीत्। किन्तु तेन प्राप्तः आयः अन्नवस्त्रादीनां कृते अपि पर्याप्तः न भवति स्म। तस्य पत्नी धनदाहेन पुत्रं चौर्यं कर्तुं प्रेषयति स्म।

''एवं तर्हि भवान् चौर्यार्थं मम गृहम् एव किमर्थम् आगतवान्?'' इति दयानन्दः पृष्टवान्। मद्विषये इदानीम् अपि रामस्य द्वेषः स्यात्। अतः एव स्वीयं पुत्रं प्रेषितवान् स्यात् इति दयानन्दः भावितवान्।

''अस्मिन् नगरे प्रथमं चौर्यं भवतः गृहे

एव करणीयम् इति मम पिता उक्तवान्। चौर्यं कर्तुं भवतः गृहम् अनुकूलतमम्। यदि बन्धनं भवति चेदपि भवता क्षमा लभ्यते इति तस्य भावना" इति उक्तवान् रामस्य पुत्रः।

सद्यः एव दयानन्दः रामस्य पुत्रं प्रीत्या स्पृशन्, "इतः परं कदापि चौर्यं न करोतु। वाणिज्ये भवतः यथा उन्नतिः भवेत्, तथा अहं व्यवस्थां करोमि, भवान् अत्रैव तिष्ठतु" इति उक्तवान्।

वेतालः एवं कथा समाप्य "भोः राजन्, चौर्यप्रयत्ने एव बद्धं रामस्य पुत्रं अदण्डयन् दयानन्दः वाणिज्ये महत्साहाय्यं करिष्यामि इति उक्तवान् किल? इदं युक्तं वा? एवम् अनालोच्य कार्यं क्रियते चेत्, तेन प्रेरिताः सन्तः अन्येऽपि तथैव चौर्यं कुर्युः किल? वस्तुतः दयानन्दः मुग्धः वा, दयाशीलः वा इत्येव भ्रान्तिः भवति। एतस्य मम सन्देहस्य उत्तरं ज्ञात्वा अपि भवान् न वदति चेत् भवतः शिरः सहस्रधा छिन्नं भवति इति जानाति किल?" इति पृष्टवान्।

तदा त्रिविक्रमः एवं उक्तवान्- "लोके दयानन्दसदृशाः जनाः अतीव विरलाः इत्यत्र संशयः नास्ति। यदा रामः चौर्यं कृतवान् तदा क्षमां प्राप्य अपि सः स्वीयं दयागुणं न विश्वसितवान् इति तस्य संशयः आसीत् एव। किन्तु यदा सः स्वीयं पुत्रं अत्रैव पुनः चौर्यार्थं प्रेषितवान्, तदा स्वीये दयागुणे रामस्य विश्वासः अस्ति इति तस्य विश्वासः जातः। रामस्य मनोभावं ज्ञातवतः दयानन्दस्य मनः उदात्तं जातम्। अतः तस्य पुत्राय साहाय्यं दातुं निश्चयं कृतवान्। सः नैव मुग्धः। सज्जनाः अन्येषां प्रशंसां न इच्छन्ति। किन्तु स्वीयगुणान् अन्ये आदरेण पश्यन्ति चेत्, सज्जनाः सन्तुष्टाः भवन्ति। दयानन्दस्य व्यवहारस्य मूलं कारणम् एतदेव।"

एवंरीत्या यदा महाराजस्य मौनभङ्गः जातः, तदा शवसहितः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखां पुनः अवलम्बितवान्।



# समयप्रज्ञा

सीतापुरस्य भूस्वामी स्वीये आम्रोपवने एकं विश्रान्तिभवनं निर्मापितवान् । तस्य भवनस्य भित्तीनां वर्णलेपनार्थम् एकः लेपकः अपेक्षितः। किन्तु भूस्वामिनः विलक्षणस्वभावं जानन्तः ग्रामलेपकाः तत् कार्यं कर्तुं न इच्छन्ति स्म । सः भूस्वामी सर्वेषां कार्येषु सर्वदा यं कमपि दोषं प्रदर्शयति स्म ।

तदा कार्यान्तरनिमित्तेन तं ग्रामम् आगतः सोमनाथः भूस्वामिनः समीपम् आगत्य –"भोः, अद्य आरभ्य सप्ताहं यावत् अहम् अस्मिन् ग्रामे वसामि । भवान् इच्छति चेत्, भवतः विश्रान्तिभवनस्य भित्तीनां वर्णलेपनकार्यं बहुसमीचीनतया करोमि" इति पृष्टवान् ।

"अस्तु करोतु । किन्तु मम सूचनानुसारेण एव कार्यं करोति चेत्, धनं दास्यामि । नो चेत् एकं नाणकम् अपि न दास्यामि" इति उक्तवान् भूस्वामी ।

सोमनाथः अङ्गीकृतवान् । तदा भूस्वामी एकां लघ्वीं काष्ठपेटिकां आनीय तस्य हस्ते दत्त्वा "अस्याः पेटिकायाः यः वर्णः दृश्यते, साक्षात् सः एव वर्णः भवनान्तर्भागस्य भित्तिषु लेपनीयः" इति उक्तवान् । सोमनाथः सप्ताहावधौ अङ्गीकृतं कार्यं पूर्णीकृतवान् । भूस्वामी काष्ठपेटिकां प्रतिभित्ति समीपम् अपि नीत्वा वर्णसादृश्यं परीक्ष्य सन्तृप्तः अभवत्, तथा सोमनाथाय धनं दत्तवान् ।

पुनः एकसप्ताहानन्तरं भूस्वामी पत्न्या सह विश्रान्तिभवनं गतवान् । तत्र सोमनाथस्य नैपुण्यं श्लाघमानः –"सः वर्णमिश्रणकार्ये निपुणः अस्ति । मम काष्ठपेटिकायाः वर्णसादृश्यम् एव अत्र लेपितवान् अस्ति । अस्माकं कार्यालये तस्य कृते एकः उद्योगः कल्पनीयः" इति उक्तवान् ।

भूस्वामिनः पत्न्याः मनसि अकस्मात् काचित् शंका उत्पन्ना । सा काष्ठपेटिकायाः वर्णं स्वीयनखेन परीक्षितवती । सः वर्णः नूतनः इति ज्ञातः । तदा सा उच्चैः हसन्ती –"सः भवतः सूचनानुसारेण काष्ठपेटिकायाः वर्णसदृशं वर्णं भित्तिषु न लेपितवान् । किन्तु भित्तिषु वर्णलेपनं कृत्वा तम् एव वर्णं काष्ठपेटिकायाम् अपि लेपितवान् अस्ति" इति उक्तवती ।

लेपकेन कृतां वञ्चनां ज्ञात्वा भूस्वामी यद्यपि कुपितः, तथापि सोमनाथस्य बुद्धिमत्तां दृष्ट्वा हसितवान् अपि ।





# राजकुमार्याः चिन्ता

**स्व**र्णपुरस्य राजकुमारी लतादेवी बाल्यात् आरभ्य चित्रकलायाम् अत्यासक्ता। अतः तस्याः पिता महाराजः मनोहरसिंहः तां पाठयितुं प्रसिद्धं चित्रकारं द्योतकं नियोजितवान्। द्योतकः श्रद्धया प्रीत्या च तां पाठितवान्। लतादेवी अत्यासक्त्या सर्वं पठन्ती शीघ्रम् एव चित्रकलायां नैपुण्यं प्राप्तवती।

एकदा द्योतकः महाराजम् उक्तवान्- "प्रभो ! कुमार्याः कृते इतःपरं मया पाठनीयं किमपि नास्ति। चित्रकौशलेन सा माम् अपि अतिशेते। अतः इदानीं मम गमनार्थम् अनुज्ञां दातुम् अर्हति भवान्" इति।

द्योतकस्य वचनेन सन्तुष्टः महाराजः तं सम्मानपूर्वकं सगौरवं प्रेषितवान्।

केषाञ्चित् दिनानाम् अनन्तरं लतादेवी एकं चित्रं चित्रितवती। तच्च चित्रं कस्यचित् राजकुमारस्य। स च राजकुमारः सुन्दरः श्वेताश्वस्य उपरि उपविष्टः च। पृष्टभूमौ अरण्यं सूर्यास्तं च शोभते स्म। चित्रम् अत्यद्भुतम् आसीत्।

चित्रलेखनानन्तरं लतादेव्याः मुखे विषादस्य छाया व्याप्ता। तस्याः उत्साहः क्षीणः अभवत्। पुनः पुनः चित्रं पश्यन्त्याः तस्याः मुखतः अश्रुधारा प्रवहति स्म। राजा राज्ञी च बहुविधप्रश्नैः तस्याः चिन्तायाः कारणं पृष्टवन्तः। किन्तु राजकुमार्याः रोदनम् एव उत्तरम्। दिने दिने तस्याः आरोग्यं क्षीणताम् आपन्नम्।

एवं स्थिते कदाचित् मन्त्री अजेयशर्मा राजानम् उक्तवान्- "महाराज ! प्रायः आत्मना लिखिते चित्रे राजकुमार्या कश्चन दोषः दृष्टः स्यात्। तेन सा दुःखिता इति

"भामहः"



द्योतकस्य गमनानन्तरं लतादेव्याः आप्तसखी इन्दुलेखा महाराजम् एकान्ते निवेदितवती- "महाप्रभो ! अहम् चिन्तयामि- चित्रस्थः राजकुमारः राजकुमार्या पूर्वं कुत्रापि दृष्टः स्यात्। तं परिणेतुम् इच्छन्ती सा प्रायः चिन्ताकुला अस्ति। भवन्तं निवेदयितुं सा सङ्कोचम् अनुभवति। मया एतद्विषये बहुवारं पृष्टम्। तदा सा कोपं प्रदर्शितवती" इति।

'इन्दुलेखायाः वचनं सत्यं स्यात्' इति महाराजः चिन्तितवान्। अतः सः राज्ञ्या सह लतादेव्याः समीपं गत्वा- "चित्रे लिखितः राजकुमारः भवत्या कुत्रापि दृष्टः वा ? किं तं भवती परिणेतुम् इच्छति ? तथा चेत् निःसङ्कोचं वदतु" इति उक्तवान्।

तदा लतादेवी कोपं प्रकटयन्ती- "भवान् असान्दर्भिकं किमपि किमपि वदति" इति उक्त्वा रोदितुम् आरब्धवती।

किं करणीयम् इति महाराजः न ज्ञातवान्। तद्दिनपूर्णं सः चिन्तायां मग्नः आसीत्। अन्ते सः मन्त्रिणम् आहूय एतद्विषये तदीयं अभिप्रायं पृष्टवान्।

मन्त्री उक्तवान्- "महाराज ! राजकुमार्याः चिन्तायाः कारणं ज्ञात्वा यः परिहारमार्गं सूचयति तस्मै राज्यस्य कश्चन भागः दीयते इति भाति। अतः द्योतकम् एकवारम् आहूय पृच्छामः चेत् समस्यायाः कोऽपि परिहारः लभ्येत" इति।

महाराजः दूतद्वारा द्योतकम् आनायितवान्। पुत्र्या लिखितस्य चित्रस्य परीक्षार्थम् आदिष्टवान् च। द्योतकः चित्रं सुसूक्ष्मं परिशीलितवान्। तथापि तेन चित्रे कोऽपि लोपः न दृष्टः। अतः सः महाराजम् उक्तवान्- "प्रभो ! चित्रे कोऽपि दोषः नास्ति एव। एतादृशं चित्रं अन्येन लेखितुं कष्टम् अस्ति। चित्रस्य निर्दोषता मया प्रतिपादिता चेदपि राजकुमारी न समाहिता। किमपि कर्तुम् अहम् असमर्थः" इति।

उद्घोषयामः। तेन किमपि सिध्येत" इति। राजा एतत् अङ्गीकृतवान्।

अनन्तरदिने देशे सर्वत्र सडिण्डिमघोषं एषा वार्ता प्रसारिता। बहवः मेधाविनः चित्रकाराः च आगत्य राजकुमार्याः चिन्तायाः कारणं ज्ञातुं प्रयत्नं कृतवन्तः। किन्तु तेषु कोऽपि सफलतां न प्राप्तवान्।

अत्रान्तरे सुकेतुः नाम कश्चित् आगत्य "महाप्रभो! राजकुमार्या लिखितं चित्रं पश्यामि चेत् अहं तस्याः चिन्तायाः कारणं वक्तुं शक्नोमि" इति उक्तवान्।



तदा राजा असमाधानेन उक्तवान्- "चित्रे कोऽपि दोषः नास्ति इति चित्रकार-गुरूणां गुरूणा द्योतकेन सुसूक्ष्मं परिशील्य उक्तम् अस्ति। एवं स्थिते अपि पुनः भवान् द्रष्टुम् इच्छति किल? किं प्रयोजनं तेन। एवं द्रष्टुं का योग्यता भवतः?" इति।

"प्रभो! अस्याः समस्यायाः परिहारे योग्यता प्रधाना न। मनोधर्मज्ञानसमर्थं लोक-ज्ञानम् अत्रअपेक्षितम्। तथापि योग्यता ज्ञातव्या इत्येव अस्ति चेत् श्रृणोतु- अहं बहूनां महा-राजानां आस्थानेषु नाटयाचार्यरूपेण चित्रकला-सङ्गीत-शिक्षकरूपेण च आसम्" इति उक्तवान् सुकेतुः।

तदा मन्त्री उक्तवान्- "प्रभो! एषः इतरेभ्यः विशिष्टः दृश्यते। अवकाशदानेन अस्माकं का हानिः?" इति।

महाराजः एतत् अङ्गीकृतवान्। सेवकाः चित्रम् आनीतवन्तः। चित्रदर्शनानन्तरं सुकेतुः राजकुमारीम् उक्तवान्- "आर्ये, भवत्याः समस्या मया ज्ञाता। भवत्या असदृशं चित्रं लिखितम्। एतादृशं चित्रं लेखितुम् अन्यः न शक्नोति। भवती एतादृशम् उत्तमं अन्यत् चित्रं लेखितुम् अपि न शक्नोति। एतदेव भवत्याः चिन्तायाः कारणम्। किन्तु असाध्यचिन्तनेन कस्य को वा लाभः?"

लतादेव्याः मुखे काचित् अन्यचिन्ता-व्याकुलता दृष्टा। सा यदा किञ्चित् वक्तुम् उद्युक्ता तदा महाराजः- "राजकुमार्याः चिन्ता-परिहारोपायं चिन्तयतु इत्युक्ते तस्याः चित्र-

कलाप्राज्ञतां विमृशति किल ? प्राज्ञता सर्वैः अपि पूर्वम् एव ज्ञाता । इदानीं तस्याः प्रस्तावेन किं प्रयोजनम् ?'' इति ।

''प्रभो ! चिन्तायाः परिहारः एव मया उच्यमानः अस्ति । कारणज्ञानानन्तरम् एव किल परिहारचिन्तनम् ? वस्तुतः मानवः इष्टस्य साधनेन केवलं निश्चिन्तः न भवति । 'साधनीयं किमपि नास्ति' इति भावनया अपि सः चिन्ताव्यग्रः भवेत् । भवतः कुमारीविषये एवम् एव जातम् । बाल्यादारभ्य एतस्याः चित्रकलायाम् आसक्तिः । तस्यां कलायाम् एषा पराकाष्ठतां प्राप्तवती अस्ति । इदानीं यदि एषा कलायाः अन्यमुखानि सङ्गीतनाट्यादीनि अभ्यस्यति तर्हि तदा एव चिन्तामुक्ता भविष्यति'' इति उक्तवान् सुकेतुः ।

तदा राजकुमारी लतादेवी मन्दहासपूर्वकम् उक्तवती- ''तात ! एतेन यत् उच्यते तत् सत्यम् एव । अश्वारोहिणः चित्रे कौशलस्य पराकाष्ठा मया प्रदर्शिता । एतादृशम् अन्यत् चित्रं लेखितुम् अहम् न शक्नोमि । अन्य कलायाः अभ्यासे मया अद्यावधि प्रयत्नः न कृतः आसीत् । प्रयत्नेन अन्यां कलां साधयितुं शक्यते वा न वा ? भवन्तः तत् अङ्गीकुर्युः वा, उत विवाहयोग्यायाः भवत्याः पुनः अन्यत्र प्रवृत्तिः किमर्थम् इति वदेयुः वा ? विवाहानन्तरं पठितस्य अनुवर्तनार्थम् अवकाशः भवेत् वा ? इत्यादिभिः चिन्ताभिः अहं व्याकुलिता आसम् । अद्य ताः सर्वाः चिन्ताः परिहृताः । अद्य एव नाट्यशास्त्रस्य अभ्यासं कर्तुम् आरम्भं करोमि । एते एव मार्गदर्शकाः भवन्तु'' इति ।

तदा महाराजः सन्तोषपूर्वकम् उक्तवान्- ''आचार्यवर्य ! अद्य आरभ्य भवान् एतस्याः गुरुः भवतु । भवते राजस्य कञ्चन भागं दास्यामि ।''

सुकेतुः मन्दहासं प्रकटयन्- ''राज्यं मम किमर्थम् ? अहं भवतः आस्थाने स्थित्वा राजकुमारीं यावच्छक्यं नाट्यशास्त्रं पाठयामि । एतेन एव अहं तृप्तः'' इति उक्तवान् ।





# देवधर्मः

पूर्वं कश्चित् धर्मनिष्ठः काशीं पालयन् आसीत्। तस्य पुत्रद्वयम्। तयोः एकस्य नाम महिंसासः। अपरस्य नाम चन्द्रकुमारः। महिंसासः बोधिसत्त्वस्य अंशेन समेतः। एतयोः बाल्ये एव महाराज्ञी दिवङ्गता।

अल्पे एव काले राजा अन्यां युवतीं परिणीतवान्। तां पट्टमहिषीं कृतवान् च। नूतना राज्ञी महाराजस्य प्रेमपात्रम् आसीत्। एकवर्षाभ्यन्तरे तस्याः एकः पुत्रः जातः। तस्य नाम सूर्यकुमारः इति निश्चितम्। पुत्रस्य सौन्दर्येण गुणेन च आकृष्टः राजा स्वपत्नीम् उक्तवान्- 'भवती पुत्रार्थं किमपि वरं प्रष्टुम् इच्छति चेत् पृच्छतु'' इति।

''अद्य किमपि मास्तु। कालान्तरे पृच्छेयम्'' इति उक्तवती राज्ञी।

कानिचन वर्षाणि अतीतानि। सूर्यकुमारः प्राप्तवयस्कः जातः। एकदा राजा भोजनानन्तरं विश्रान्तिसुखम् अनुभवन् आसीत्। तदा राज्ञी आगत्य उक्तवती- ''भवान् मम पुत्रस्य बाल्ये वरं दत्तवान् किल ? तदर्थम् इदानीं पृच्छामि- मम पुत्रः सिंहासनाधिकारं प्राप्नोतु'' इति।

राजा क्रुद्धः। ''अग्निकुमारौ इव तेजस्विनौ ज्येष्ठपुत्रौ स्तः। एवं स्थिते भवत्याः कुमारस्य राज्याभिषेकः असम्भवः एव'' इति स्पष्टम् उक्तवान्।

इदानीं महाराजस्य मनसि आशङ्का उत्पन्ना- 'एषा पट्टमहिषी मम ज्येष्ठकुमारयोः अहितं कुर्यात्' इति। अतः सः एकस्मिन् दिने महिंसासं चन्द्रकुमारं च आहूय उक्तवान्- ''सूर्यकुमारस्य जन्मसन्दर्भे मया भवतोः विमातुः कृते कश्चन वरः दत्तः आसीत्। इदानीं सा सूर्यकुमारस्य राज्याभिषेकं इच्छति। अहं तु एतत् न इच्छामि। किन्तु स्त्रीबुद्धिः




प्रल्यान्तिका किल? सा भवतोः किमपि अहितं कुर्यात्। अतः भवतोः अरण्यगमनं वरम्। मम मरणानन्तरम् अत्र आगत्य राज्यं वशीकर्तुं शक्यते" इति।

सूर्यकुमारः एतत् किमपि न जानाति। यदा सहोदरौ अरण्यं प्रस्थितौ तदा एषः अपि प्रस्थितः। अग्रजाभ्यां निवार्यमाणः अपि एषः तौ अनुसृतवान् एव। एवं त्रयः अपि अरण्यं गतवन्तः।

त्रयः अपि हिमालयस्य उपत्यकां प्राप्तवन्तः। बोधिसत्त्वः वृक्षस्य छायायाम् उपविशन् सूर्यकुमारम् उक्तवान्- "सूर्यकुमार! भवान् यथेष्टं जलं पीत्वा कमलपत्रेण आवयोः कृते अपि जलम् आनयतु" इति।

तस्मिन् सरोवरे कश्चन जलराक्षसः यक्षः निवसति स्म। एतं सरोवरं एतस्मै यच्छन् कुबेरः उक्तवान् आसीत्- "भोः, देवधर्मम् अजानन् कश्चित् सरोवरे अवतरति चेत् भवान् तं खादतु। सरोवरे अप्रविष्टः वा, देवधर्मज्ञः वा भवता न खादनीयः" इति। एतदनन्तरं बहवः एतस्य जलराक्षसस्य आहाराः सञ्जाताः।

यदा सूर्यकुमारः सरोवरं प्रविष्टः तदा सः यक्षः पृष्टवान्- "भवान् देवधर्मं जानाति वा?"

"आम्, अहं जानामि। सूर्यचन्द्रयोः आचारः एव देवधर्मः" इति उक्तवान् सूर्यकुमारः।

"भवान् देवधर्मं न जानाति" इति उक्त्वा यक्षः तं जलभवने बन्धने स्थापितवान्।

सूर्यकुमारस्य अनागमनं ज्ञात्वा बोधिसत्त्वः चन्द्रकुमारं जलम् आनेतुं प्रेषितवान्। जलं स्वीकर्तुम् इच्छन् चन्द्रकुमारः यदा सरोवरे अवतीर्णः तदा यक्षः पृष्टवान्- "देवधर्मः नाम कः?" इति।

चन्द्रकुमारः उक्तवान्- "देवधर्मस्य अर्थः यत् चतस्रः दिशः" इति।

यक्षः "भवान् अपि देवधर्मं न जानाति" इति उक्त्वा तं जलभवनं नीतवान्।



चन्द्रकुमारः अपि यदा न प्रत्यागतः तदा बोधिसत्त्वः स्वयम् उत्थाय सरोवरसमीपं गतवान्। सरोवरतीरे द्वयोः पादचिह्नं दृश्यते स्म। गमनचिह्नं स्पष्टतया आसीत्। किन्तु प्रत्यागमनचिह्नं न दृश्यते स्म। बोधिसत्त्वः ज्ञातवान् यत् अस्मिन् सरोवरे कश्चन ब्रह्मराक्षसः अस्ति इति। अतः सः खड्गम् आकृष्य युद्धसन्नद्धः भूत्वा स्थितवान्।

बहुकालपर्यन्तम् अपि बोधिसत्त्वः सरोवरे न अवतीर्णः एव। एतत् दृष्ट्वा खिन्नः ब्रह्मराक्षसः ब्राह्मणवेषं धृत्वा तस्य समीपम् आगतवान्। उक्तवान् च- "महानुभाव! भवान् स्नानं न कृतवान्। जलपानम् अपि न कृतवान्। किमर्थं तीरे एव स्थितवान्?" इति।

'पुरतः ब्राह्मणवेषेण स्थितः ब्रह्मराक्षसः एव' इति बोधिसत्त्वः ज्ञातवान्। अतः सः सधैर्यं पृष्टवान्- "भवान् एव किल मम सहोदरौ नीतवान्?" इति।

"आम्, अहम् एव तौ बन्धने स्थापितवान्" इति उक्तवान् यक्षः।

"एवं किमर्थं कृतवान्?" इति पृष्टवान् बोधिसत्त्वः।

"ये अस्मिन् सरोवरे पदं स्थापयन्ति ते मम अधीनाः भवन्ति।"

"सरोवरं प्रविष्टाः सर्वे भवतः अधीनाः भवेयुः वा?"

"न यः देवधर्मं न जानाति सः मम आहारः भवति। भवतः सहोदरौ एतेन एव कारणेन मया बन्धने स्थापितौ।"

"देवधर्मं ज्ञातुम् इच्छति वा? अहं वदामि तद्विषये" इति उक्तवान् महिंसासः बोधिसत्त्वः।

'वदतु तावत्' इति उक्तवान् यक्षः।

"निन्दाभीरवः, शुभकर्मकारिणः, प्रेमजीविनः, शान्तप्रकृतयः च सज्जनाः यत् आचरन्ति तत् एव देवधर्मः" इति बोधिसत्त्वः उक्तवान्।

एतेन उत्तरेण यक्षः सन्तुष्टः। अतः सः बोधिसत्त्वम् उक्तवान्- "अहं भवतः उत्तरेण

तृप्तः अस्मि। भवतः सहोदरयोः अन्यतरस्य बन्धविमोचनं कर्तुं शक्नोमि। भवान् कम् इच्छति ?'' इति।

''अहं सूर्यकुमारम् एव इच्छामि'' इति उक्तवान् बोधिसत्त्वः। तदा यक्षः उक्तवान्- ''अये महानुभाव! भवान् देवधर्मं केवलं जानाति, न तु तस्य आचरणम्'' इति।

''किमर्थम् एवं वदति ?'' इति पृष्टवान् बोधिसत्त्वः।

''सहोदरयोः ज्येष्ठं भवान् न इच्छति। अतः ज्येष्ठेषु आदरप्रदर्शनं भवान् न जानाति इति तु सिद्धम्'' इति उक्तवान् यक्षः।

''यक्ष! कनिष्ठम् इच्छता मया देवधर्मः पालितः एव। कनिष्ठसहोदरकारणतः मया अरण्यम् आगन्तव्यम् आपतितम्। मम विमात्रा तदीयपुत्रस्य पट्टाभिषेकः प्रार्थितः। तदा पिता आवयोः अमङ्गलं सम्भवेत् इति चिन्तयन् आवाम् अरण्यं प्रेषितवान्। सः कनिष्ठसहोदरः आवाम् अनुसृतवान्। एवं स्थिते यदि अहं कनिष्ठसहोदरेण विना नगरं प्रविशामि तर्हि सर्वे मम विषये सन्देहं प्रकटयेयुः। तं ब्रह्मराक्षसः खादितवान् इत्येतं विषयं कः विश्वसेत् ?'' इति पृष्टवान् बोधिसत्त्वः।

''साधु! महानुभाव! भवान् न केवलं देवधर्मं, अपि तु तस्य आचरणम् अपि जानाति'' इति बोधिसत्त्वम् उक्त्वा ब्रह्मराक्षसः तस्य सहोदरौ बन्धविमुक्तौ कृतवान्। तौ बोधिसत्त्वस्य वशे अर्पितवान् च।

एतदनन्तरम् अपि कानिचन दिनानि ते वने आसन्। अत्रान्तरे तेषां पितुः मरणवार्ता तैः प्राप्ता। बोधिसत्त्वः सहोदराभ्यां सह काशीं प्रत्यागतवान्। पितुः उत्तरक्रियां श्रद्धया कृतवान् च। अनन्तरं सवैभवं तस्य राज्याभिषेकः सम्पन्नः। बोधिसत्त्वः चन्द्रकुमारं युवराजपदे नियोजितवान्। सूर्यकुमारं सेनापतिस्थाने स्थापितवान् च। अनन्तरं सः बहुकालं यावत् सुखेन राज्यपरिपालनं कृतवान्।



# अमूल्यम् उपायनम्

मणिमेखलापुरस्य महाराजः गोवर्धनः प्रतिवर्षं स्वीयं जन्मदिनोत्सवं महता वैभवेन आचरति स्म। तस्मिन् दिने प्राप्तेषु उपायनेषु अत्यधिकमौल्ययुतम् उपायनं यः ददाति, सः भोजनसमये महाराजस्य पार्श्वपीठम् अलङ्कर्तुम् अर्हति स्म। एतादृशस्थानप्राप्तिं बहुमन्यमानाः धनिकजनाः महाराजाय उपायनदानविषये परस्परं स्पर्धन्ते स्म।

एषः सम्प्रदायः न साधुः इति चिन्तितवान् तत्रत्यः एकः संन्यासी। सः एकस्मिन् जन्मदिनोत्सवे महाराजाय एकां शुष्कां रोटिकाम् उपायनरूपेण दत्तवान्। तेन सह एकं पत्रम् अपि दत्तवान्। पत्रे-"भोः! महाराज, भवते अमूल्यम् उपायनम् दातुम् अहम् असमर्थः अस्मि। तथापि भवतः विषये महत् गौरवम् अस्ति। अतः परिश्रमेण सम्पादिताम् एतां रोटिकां भवते ददामि। एषा शुष्करोटिका इति अवज्ञा मास्तु। मम एकदिनस्य आहारः एषः" इति लिखितम् आसीत्।

तत् पत्रं पठित्वा महाराजः स्वीयं दोषं ज्ञातवान्। प्रीत्या मनः पूर्वकं दीयमानं प्रत्येकम् उपायनम् अपि अमूल्यमेव इति सः ज्ञातवान्। अनन्तरं तस्मिन् दिने भोजनसमये महाराजः पार्श्वपीठम् अलङ्कर्तुम् संन्यासिनम् आहूतवान्। किन्तु तदपेक्षया प्रजानां साधारणं स्थानम् एव योग्यतमम् इति संन्यासी उक्तवान्।








# वेषधारी मल्लिनाथः

अनेकवर्षेभ्यः पूर्वं सिंहपुरिराज्ये मल्लिनाथ-नामकः अतिकुशलः एकः वेषधारी आसीत्। सः अपेक्षितानां सर्वविधानाम् अपि वेषाणां धारणेसमर्थः आसीत्। किञ्च तादृशवेषधारण-समये तत्तदुचितैः हावभावविलासैः पण्डित-पामरान् सर्वान् रञ्जयति स्म।

एकदा नवरात्रमहोत्सवसन्दर्भे एकस्मिन् ग्रामे युवकानां मध्ये शक्तिप्रदर्शनसम्बन्धिस्पर्धाः प्रचलन्ति स्म। तत्र सम्मिलिताः सहस्रशः ग्रामस्थाः मध्ये मध्ये हर्षोद्गारान् कुर्वन्ति स्म। तदा मल्लिनाथः तस्य देशस्य सेनापतिवेषं धृत्वा अकस्मात् तत्र प्रविष्टवान्। तत्र स्थिताः ग्रामवृद्धाः तं दृष्ट्वा भ्रान्ताः। अतः ते महता आदरेण भक्त्या च तं समानीय, उन्नतासनं दत्त्वा, तस्य सत्कारं कृतवन्तः।

स्पर्धाः समाप्ताः। तासु स्पर्धासु ये विजयं प्राप्तवन्तः, तेभ्यः ग्रामवृद्धाः मल्लिनाथस्य हस्तद्वारा बहुमानानि दापितवन्तः। मल्लिनाथः सेनापतिवत् एव धीरगम्भीरभावान् प्रकटयन् बहुमानवितरणं कृतवान्। अन्ते तत्र उपस्थितान् जनान् उद्दिश्य स्वीयसहजकण्ठेन "भवन्तः सर्वे सहृदयाः इति भावयामि। अतः मद्विषये भवतां क्षमा अस्तु। भवतां शक्तिप्रदर्शनं द्रष्टुं वास्तविकः सेनापतिः अत्र नास्ति। एतत् अस्माकं दौर्भाग्यम्। यदि सः अत्र अभविष्यत् तर्हि झटिति एतेभ्यः सर्वेभ्यः सेनायां उन्नतान् उद्योगान् आदास्यत्" इति उक्तवान्।

तस्य वचनं श्रुत्वा तत्र स्थितानां सर्वेषां महत् आश्चर्यम् अभवत्। तदा तस्मिन् ग्रामे पण्डितः इति ख्यातः उदयभट्टः मल्लिनाथस्य समीपम् आगत्य–"भोः मल्लिनाथ, भवतः वेषः अत्यद्भुतः अस्ति! भवतः दर्शनेन मम महान् सन्तोषः जातः" इति उक्तवान्।

मल्लिनाथः सेनापतिवेषम् अपनीय विनयेन

"आर्ये, मम अपराधं क्षाम्यतु। उत्सवदिनेषु सर्वेषां मनांसि विनोदयितुम् एतं वेषं धृतवान्! सेनानायकस्य विडम्बनं कर्तुम् एवं न कृतवान्" इति उक्तवान्।

उदयभट्टः हसन् "साधु साधु! मल्लिनाथ! सेनापतिवेषं धृत्वा विनयप्रदर्शनम् अनुचितम् इत्यपि जानाति। वेषोचितं भाषणम्। एतादृशः व्यवहारकुशलः भवान् अस्माकं वीरसेनमहाराजस्य समीपं किमर्थं न गच्छति?" इति पृष्टवान्।

"मम वेषधारणकौशलं महाराजस्य पुरतः प्रदर्शनीयं वा? एतत् कार्यं सुसाध्यं वा?" इति आश्चर्येण पृष्टवान् मल्लिनाथः।

"किमर्थं तथा पृच्छति? अस्माकं महाराजः कलापोषकः। महता आदरेण समर्थानां कलाकाराणां सत्कारं करोति। वृथा संशयः मास्तु। राजदर्शनं करोतु" इति प्रोत्साहं दत्तवान् उदयभट्टः।

तस्य वचनानुसारं मल्लिनाथः धैर्येण राजधानीं गत्वा, वीरसेनराजस्य दर्शनं प्राप्तवान्। महाराजस्य पुरतः वेषद्वयं प्रदर्शयामि इति प्रार्थितवान्। वीरसेनः अङ्गीकृतवान्।

प्रथमदिने मल्लिनाथः संन्यासिवेषं धृत्वा राजसभां प्रविष्टवान्। प्रथमं स्वस्तिवचनम् उक्त्वा, अनन्तरं देशविदेशेषु अटन् अहं सर्वत्र हितोपदेशं करोमि इति कथयन्, वेदान्तविषयान् अधिकृत्य प्रवचनं कृतवान्। प्रवचनमध्ये उदाहरणरूपेण अनेकसंस्कृतश्लोकान् पठितवान्। एतत् सर्वं श्रुत्वा महाराजः पौराः



च अतीव हृष्टाः।

अन्ते महाराजः शतादीनारान् तस्मै बहुमानरूपेण दातुं प्रवृत्तवान्। किन्तु मल्लिनाथः तत् धनं ग्रहीतुम् अनिच्छन्, गम्भीरमुखभावेन "महाराज, जीवितं प्रति वैराग्यं प्राप्य संन्यासं गृहीतवान् अस्मि। तादृशस्य मम धनेन किं प्रयोजनम् ?" इति उक्त्वा ततः निर्गतवान्।

परेद्युः मल्लिनाथः नर्तकीवेषं धृत्वा सभां समागतवान्। तत्र हावभावविलासान् प्रदर्शयन् अद्भुतरूपेण नाट्यं कृतवान्। अद्यापि पौराः तस्य विद्याकौशलं श्लाघमानाः हर्षध्वनिं कृतवन्तः। महाराजः अपि सन्तुष्टः भूत्वा तस्मै बहुमानरूपेण शतदीनारान् दातुम् आज्ञापितवान्।

मल्लिनाथः विनयपूर्वकं महाराजं नमस्कृत्य "महाप्रभो, भवान् महाकलाभिमानी इति श्रुत्वा आगतवान् अस्मि। किन्तु भवता दीयमानं शतदीनारात्मकं बहुमानं भवतः कलाभिमानं ह्रस्वीकरोति। अतः स्वामिन्, मम विद्यायाः अनुरूपं बहुमानम् अहम् इच्छामि" इति उक्तवान् नर्तकीध्वनिना एव।

महाराजः तस्य वचनं श्रुत्वा आश्चर्येण "किमिदं भोः ? ह्यः भवान् शतदीनारात्मकं बहुमानं निराकृतवान्। अद्य तु इतोऽपि अधिकम् इच्छति खलु ? भवतः अस्य प्रवर्तनस्य कोऽर्थः ?" इति पृष्टवान्।

तदा मल्लिनाथः वेषभूषणादिकम् अपनीय विनयेन – "प्रभो, ह्यः मया संन्यासिवेषः गृहीतः आसीत्। तस्य वेषस्य अनुरूपं वेदान्तशास्त्रोक्तं वैराग्यभावं प्रदर्शितवान्। अद्य तु मया नर्तकीवेषः गृहीतः खलु ? नर्तक्याः तु सहजतया एव लौकिकविषयेषु मोहः वर्तते एव। तस्याः महान् धनदाहः अपि भवति। अतः तादृशवेषानुरूपं प्रवर्तनम् एव अहं प्रदर्शितवान् अस्मि इति" उक्तवान्।

महाराजः तस्य वचनैः अतीव आनन्दितः। अनन्तरं पञ्चाशत दीनारान् तस्मै बहुमानरूपेण दत्तवान्।






अस्माकं नद्यः –

# तमसा

पूर्वं शुक्राचार्यः नाम मुनिः अरण्ये निवसति स्म। तस्य अरजा नाम पुत्री आसीत्। आश्रमसमीपे स्थिते तडागे स्नानं अरजायाः प्रियम् आसीत्।

एकदा अरजा तडागे स्नानं कुर्वती आसीत्। तदा दण्डकः नाम राजा वृक्षान्तरितः सन् तां दृष्टवान्। तस्याः सौन्दर्येण आकृष्टः च।





अरजा स्नानं समाप्य तीरम् आगतवती। तदा दण्डकः तस्याः पुरतः आगत्य परिणयेच्छां प्रकटितवान्। आत्मना सह आगन्तुं प्रार्थितवान् च। अरजा एतत् तिरस्कृतवती। अतः दण्डकः तां बलात्कारेण नेतुं प्रयत्नं कृतवान्।



अरजा कथञ्चित् प्रयत्नेन दण्डक-हरतात् विमोचनं प्राप्य कुटीरं प्राप्तवती । दण्डकेन कृतम् अपमानं पित्रे निवेद्य विलापं कृतवती । तेन मुनिः तीव्रं कुपितः ।

'एतत् राज्यं दुष्टैः आकीर्णम् अस्ति । असहायानां रक्षकः राजा एव सज्जनान् पीडयति। अतः अस्मिन् राज्ये निवसतः सज्जनान् विना सर्वे विनष्टाः भवन्तु' इति मुनिः शापं दत्तवान् ।





मुनेः शापस्य फलेन अकस्मात् अग्निः उत्पन्नः । समग्रे देशे व्याप्तः च । अग्निकारणेन वनानि दग्धानि । नदी तडागादयः शुष्काः जाताः । अरजा तु अग्निनिर्वाणपर्यन्तं कश्चित् तडागं प्रविष्टा आसीत् । इतरनदी-तडागेषु शुष्केषु अपि अरजया प्रविष्टः तडागः जलेन पूर्णः एव आसीत् ।

अग्निज्वालया आत्मानं रक्षन्तः जनाः देशान्तरं प्रति धावितवन्तः। दण्डकस्य राज्यं निर्मानुषं जातम्। सर्वत्र भस्मानि विकीर्णानि। कैश्चित् पक्षिभिः विना तस्मिन् प्रदेशे अन्यः जीवी न अवशिष्टः।





अनन्तरदिने आगतया वृष्टया तत्प्रदेशे स्थितानि तडागानि पूर्णानि। अवशिष्टं जलं प्रवाहरूपतां प्राप्तम्। निर्मानुषः स च प्रदेशः इदानीं जलप्रवाहेन व्याप्तः। पक्षिभिः अन्यतः आनीतानि बीजानि तत्र पतितानि। तेभ्यः च सस्यानि उत्पन्नानि। कालान्करे तानि महावृक्षाः जातानि।

एवंरीत्या नद्याः उभयपार्श्वे घनम् अरण्यम् निर्मितम् अभवत्। दण्डकस्य राज्ये उत्पन्नं तत् 'दण्डकारण्य'-नाम्ना प्रसिद्धम् अभवत्। सा च नदी 'तमसा' इति विख्याता।






भारते दण्डकारण्यं सुप्रसिद्धम्। सीतारामलक्ष्मणाः स्ववनवासदिनानि अत्रैव यापितवन्तः। एकत्र राक्षसानां पिशाचानां च, अपरत्र मुनीनां सज्जनानां च वासस्थानम् अभवत् एतत् दण्डकारण्यम्।

तमसानद्याः तीरे एव आदिकवेः वाल्मीकेः आश्रमः आसीत्। अस्याः नद्याः पवित्रे तीरप्रदेशे आदिकाव्यस्य रामायणस्य रचनम् अभवत्।






तमसानद्याः तीरप्रदेशे सीतादेव्या स्वपुत्रौ लवकुशौ पालितौ पोषितौ च। महर्षिः वाल्मीकिः एतौ रामायणमहाकाव्यस्य गानं पाठितवान्। इदानीम् अपि तमसा जनानां अज्ञानान्धकारं क्षालयन्ती दण्डकारण्ये प्रवहति।




# पाषाण-प्रतिमा

इन्द्रपुरे वज्रगुप्तः नाम कश्चित् कोट्यधीशः वणिक् आसीत्। वाणिज्येन सः यथेष्टं धनं सम्पादितवान् आसीत्। तस्य पुत्रीद्वयम्। ज्येष्ठपुत्र्याः नाम वासन्ती, कनिष्ठपुत्र्याः नाम पद्मावती। उभयोः अपि पुत्र्योः वयः सामान्यतः समानम्। किन्तु तयोः स्वभावे तु महान् भेदः दृश्यते स्म। वासन्त्याः कठोरः स्वभावः। सा अन्येषां सुखं कीर्तिं वा सोढुं न शक्नोति स्म। सेवकानां पीडने सा सन्तोषम् अनुभवति स्म। सा स्वगृहे ये सेवकाः कार्यं कुर्वन्ति तान् सर्वदा बहुधा पीडयति स्म। अतः ते अपि पद्मावतीम् एव इच्छन्ति स्म। पद्मावत्याः स्वभावः तु कोमलः। अन्ये सुखिनः चेत् एतस्याः महान् सन्तोषः। सेवकानां विषये अपि एतस्याः विशेषसहानुभूतिः।

उभयोः स्वभावः यद्यपि भिन्नं तथापि रूपं समानम्। तयोः रूपे एतावत् साम्यम् आसीत् यत् अपरिचिताः परस्परभेदज्ञाने भ्रान्ताः भवन्ति स्म।

वासन्ती स्वार्थपरा कठोरमनस्का च। 'धनिनः कुले जातानां कठोरता असहना इत्यादयः शोभन्ते' इति तस्याः विचारः आसीत्। अतः एव सा आत्मानम् उत्तमां मन्यते स्म। किन्तु तदा तदा व्यवहारे तया अपवादवचनानि श्रूयन्ते स्म। पद्मावती सर्वत्र मृदुतया शिष्टतापूर्वकं च व्यवहरति स्म। 'तया सह तोलयन्तः जनाः मां अशिष्टां भावयन्ति' इति वासन्त्याः विचारः। अतः प्रतिदिनं पद्मावतीवासन्त्योः मध्ये कलहः भवति स्म एव।

एतद्विषये पद्मावती वासन्तीं वदति स्म- "भगिनि ! किमर्थं वृथा आवयोः मध्ये कलहम् उत्पादयति? यदि आवां प्रीत्या व्यवहरावः तर्हि जनाः आवयोः स्तुतिं करिष्यन्ति"



इति।

"अन्येषां स्तुतिप्राप्तिः अनन्तरम्। प्रथमं भवती मम विषये आदरं प्रदर्शयतु। अहं यथा आचरामि तथा आचरतु" इति वदति स्म वासन्ती।

किन्तु पद्मावती वासन्तीम् अनुसर्तुं न शक्नोति। वासन्ती पद्मावतीम् अनुसर्तुं न इच्छति। अतः तयोः मध्ये दिने दिने भेदः वर्धते स्म।

एवं स्थिते कदाचित् चन्द्रकान्तः नाम शिल्पी वज्रगुप्तस्य गृहम् आगतवान्। एतं दृष्ट्वा वज्रगुप्तः चिन्तितवान् यत् गृहस्य पुरतः प्राङ्गणे किञ्चन कलामन्दिरं निर्मातव्यं, मुख्यप्रकोष्ठे सुन्दरः शिल्पः प्रतिष्ठापनीयः च इति।

चन्द्रकान्तः नवयुवकः, तथापि सर्वश्रेष्ठ-शिल्पिषु अन्यतमः आसीत्। सः कार्ये श्रद्धावान् आसीत्। कलामन्दिरस्य कार्यं सन्तोषेण सः अङ्गीकृतवान्। वासन्ती पद्मावती च चन्द्रकान्तस्य कलानैपुण्यं द्रष्टुम् आगच्छतः स्म। तदा शिल्पशास्त्रविषये बहुधा प्रश्नान् पृच्छतः स्म। किन्तु उभयोः प्रश्नकरणे भेदः स्फुटं दृश्यते स्म। पद्मावती विनयेन पृच्छति। किन्तु वासन्ती आत्मानं स्वामिनीं म न्य मा ना अधिकारदर्पेण पृच्छति। चन्द्रकान्तः तु खेदं विना उभयोः उत्तरं ददाति स्म।

चन्द्रकान्तस्य व्यवहारेण वासन्त्याः आश्चर्यम्। यतः जनाः पद्मावत्या सह स्नेहेन व्यवहरन्ति चेदपि वासन्त्या सह व्यव-हारे भीत्या व्यवहरन्ति स्म। किन्तु चन्द्रकान्तः तु प्रीत्या एव व्यवहरति। कथम् एषः एकः मया सह निर्भयेन प्रीत्या च व्यवहरति इति सा आश्चर्यचकिता। तं परीक्षितुम् इच्छन्ती वासन्ती पुनः पुनः तस्य समीपं गत्वा बहुविध-प्रश्नान् पृच्छति स्म।

एकदा वार्तालापमध्ये चन्द्रकान्तः वासन्तीम् उक्तवान् "अहं भवत्योः सहोदर्योः मध्ये भवतीम् एव इच्छामि" इति।

वासन्त्याः तु तस्य वचने विश्वासः नास्ति।

अतः सा उक्तवती- "भवान् असत्यं वदति।"

"असत्यम् उक्त्वा मया किं साधनीयम् अस्ति ?" इति कार्यव्यग्रः एव चन्द्रकान्तः पृष्टवान्।

वासन्ती चन्द्रकान्तं तीक्ष्णदृष्ट्या पश्यन्ती उक्तवती- "भवान् कलाकारः स्याम् नाम। किन्तु इदानीं भवान् अस्माकं सेवकः। वयं भवतः स्वामिनः। यतः भवान् वेतनं स्वीकृत्य अत्र कार्यं करोति। स्वामिन्या मया भवता सह यत् दर्पपूर्वकं व्यवहारः क्रियते तत् उचितम् एव। किन्तु पद्मावती भवता मृदुतया व्यवहरति। अतः तस्याः व्यवहारः भवते रोचेत" इति।



चन्द्रकान्तः सावधानपूर्वकम् एव उक्तवान्- "तथा नास्ति। भवती रूपवती। अहङ्कारः भवत्याः सौन्दर्यं वर्धयति। अतः अहं भवत्याः सौन्दर्यस्य दासः अस्मि। भवती मां यत्किमपि वदतु। तत् मम इष्टम् एव। यतः अहं भवतीम् बहु इच्छामि। इष्टजनानां सर्वे अपि व्यवहाराः सन्तोषाय एव भवन्ति किल ?" इति।

एतत् श्रुतवत्याः वासन्त्याः कोपः आगतः। सा असमाधानेन उक्तवती- "धनिककुले जाता अहं धनिकम् एव परिणेतुम् इच्छामि' इति एतत् सामान्यविषयम् अपि न जानाति वा भवान् ? भावादृशं धनहीनं का वा परिणयेत् ?" इति।

"अहं तत् जानामि एव। किन्तु 'प्रेम अन्धं भवति' इति वचनं भवत्या श्रुतं स्यात् किल ?" इति पृष्टवान् चन्द्रकान्तः।

वासन्त्याः मनसि सन्तोषः एव। इदम्-प्रथमतया कश्चित् पद्मावतीम् उपेक्ष्य एतस्यां प्रीतिं प्रदर्शितवान् आसीत्। अतः तस्याः अहङ्कारः प्रवृद्धः। तथाऽपि यदा यदा सा चन्द्रकान्तं द्रष्टुं गच्छति तदा तं सामान्यं मानयन्ती अगौरवेण व्यवहरति स्म।

वासन्त्याः एतादृशव्यवहारेण व्यथितः चन्द्रकान्तः एकदा तां पृष्टवान्- "भवती किमर्थं माम् अगौरवेण पश्यति ?" इति।



"दरिद्राः धनिकान् प्रीत्या गौरवेण पश्यन्ति इत्येतत् स्वाभाविकम्। तथैव धनिकाः दरिद्राणाम् उपेक्षां कुर्वन्ति इत्येतत् अपि स्वाभाविकम्। "भवान् मयि प्रीतिमान् भवतु नाम। किन्तु आवयोः विवाहः स्वप्ने अपि न शक्यम् इति मा विस्मरतु" इति।

कानिचन दिनानि अतीतानि। कदाचित् पद्मावती पितामहगृहं रामपुरं गतवती। रामपुरं एकः सुन्दरः ग्रामः। परन्तु दुरदृष्ट-वशात् तत्र वर्षद्वयतः वृष्टिः न आसीत्। जनाः पिपासया श्रान्ताः आसन्।

एतत् ज्ञात्वा पद्मावती मातुलम् पृष्टवती- "कूपखननपूर्वकं जलाभावः दूरीकर्तुं न शक्यते वा? इति।"

"सर्वं कृतम्। किन्तु कुत्रापि जलं न प्राप्तम्" इति ते निराशया उक्तवन्तः।

अत्रान्तरे एकदा पद्मावत्या भूमौ स्थितानि रत्नानि जलस्रोतः च स्वप्ने दृष्टानि। सा समग्रे ग्रामे अटित्वा आत्मना स्वप्ने दृष्टानि स्थलानि प्रदर्शितवती। ग्रामस्थाः कुतूहलेन तया प्रदर्शितेषु स्थलेषु खननं कृतवन्तः। अहो आश्चर्यम्! तया सूचितेषु स्थलेषु अमूल्यनिधयः ज ल स्रो तः च आसन्! एतेन ग्रामस्य जलसमस्या परिहृता, यथेष्टं धनम् अपि प्राप्तम्।

इदानीं जनानां सन्तोषस्य पारः एव नास्ति। अतः ते सभायां सर्वसम्मतं निश्चितवन्तः यत् पद्मावती साधारण-स्त्री न। अपि तु स्वर्गात् आगता काचित् देवता एव। अतः तस्याः सु न्द र शि ल्पः ग्रामे स्थापनीयः, तेन च कदाचित् अपि अनावृष्टिः न भवेत् इति।

ग्रामीणाः सर्वे सम्भूय पद्मावत्याः पितरं वज्रगुप्तं दृष्टवन्तः, स्वकीयं निर्णयं निवेदित-वन्तः च।

प्रसन्नः वज्रगुप्तः उक्तवान् "जीवित-काले एव येषां मूर्तिः स्थाप्येत तादृशाः विरलाः एव। मम पुत्री तादृशभाग्यशालिनी इति ज्ञात्वा कस्य वा पितुः आनन्दः न भवति" इति। अनन्तरं पद्मावत्याः मूर्तिनिर्माणकार्यं चन्द्रकान्ताय समर्पितं च।

एतत् सर्वं श्रुतवत्याः वासन्त्याः पद्मावती-विषयिणी ईर्ष्या अधिका जाता। सा कांश्चित् दुष्टान् आहूय गुप्ततया सूचनाः दत्तवती। एकत्र पद्मावत्याः विग्रहः प्रतिष्ठापितः। अपरत्र ग्रामे चौर्यं लुण्ठनं च प्रवृद्धम्।

तेषु दुष्टेषु एकः संन्यासिवेषं धृत्वा ग्रामे अटन्- "सर्वस्य अनर्थस्य कारणं विग्रहप्रतिष्ठापनम् एव। एतेन ग्रामः सम्पूर्णं विनश्यति" इति वार्ता प्रसारितवान्। एतेन ग्रामे प्रक्षुब्ध-वातावरणं निर्मितम्।



वज्रगुप्तः रामपुरस्य वार्तां समग्रां श्रुतवान्। सः चन्द्रकान्तस्य गुरोः समीपं गत्वा उक्तवान्- "आचार्य! भवान् शिष्येषु उत्तमं चन्द्रकान्तं मम समीपं प्रेषितवान्। अहं तस्य प्रतिभायां विश्वासं स्थापयन् कलामन्दिरं निर्मितवान्। चन्द्रकान्तेन एव रामपुरे पद्मावत्याः मूर्तिः निर्मिता। इदानीं सा मूर्तिः अनिष्टकारिणी इति श्रूयते। पद्मावती तु सद्गुणसम्पन्ना। यदि तस्याः मूर्तिकारणतः अनिष्टं सञ्जायते तर्हि तत्र शिल्पिनः एव दोषः" इति।

तदा गुरुः वज्रगुप्तम् उक्तवान्- "चन्द्रकान्तः मम उत्तमशिष्यः, प्रतिभावान् अपि। तेन निर्मितायां मूर्त्यां दोषः भवितुं न अर्हति" इति।

अनन्तरं सः गुरुः वज्रगुप्तेन, पद्मावत्या च सह रामपुरम् आगत्य शिल्पं सूक्ष्मं परिशीलितवान्, उक्तवान् च- "वज्रगुप्त! भवता उक्तं सत्यम् एव। पद्मावत्याम् अस्यां मूर्तौ च भेदः दृश्यते" इति।

तत्क्षणे एव सः गुरुः चन्द्रकान्तम् आहूय तीक्ष्णदृष्ट्या पश्यन् उक्तवान्- "मया चिन्तितम् आसीत् भवान् मम कीर्तिं वर्धयति इति। किन्तु मूर्तिदर्शनेन ज्ञायते यत् भवान् मम नाम कलुषीकृतवान्। एषा मूर्तिः दोषपूर्णा अस्ति" इति।

चन्द्रकान्तः गुरुं प्रणम्य विनयेन उक्तवान्- "गुरुदेव! मम शिल्पविद्यायां कोऽपि दोषः नास्ति। अपि तु मम एव। मया पद्मावत्याः मूर्तिः न, अपि तु वासन्त्याः मूर्तिः अत्र

निर्मिता" इति।

"किमर्थम् एवं कृतवान् ?" इति कोपेन पृष्टवान् आचार्यः।

"स्वभगिन्याः पद्मावत्याः मूर्तेः निर्माणस्य वार्ता श्रुत्वा वासन्ती दुःखिता अभवत्। तस्याः दुःखं ज्ञात्वा मम अपि खेदः सञ्जातः। यतः वासन्त्यां मम प्रेम अस्ति। वासन्ती-पद्मावत्योः रूपे कोऽपि विशेषः-भेदः नास्ति। अतः अहं वासन्त्याः मूर्तिं निर्मितवान्। एतत् रहस्यं कोऽपि न जानाति इति मया चिन्तितम् आसीत्। एषा वार्ता वासन्त्यै अपि न निवेदितवान्। अहं न जानामि स्म यत् येषां स्वभावे दोषः अस्ति तेषां मूर्तिनिर्माणेन ग्रामस्य एव अनिष्टं सिध्यति इति। कृपया मां क्षाम्यतु भवान्" इति वदन् चन्द्रकान्तः आचार्यस्य पादयोः पतितवान्।

प्रवृत्तं सर्वं श्रुत्वा वासन्ती आत्मग्लानिम् अनुभूतवती। सा पद्मावतीसमीपं गत्वा उक्तवती- "भगिनि! इदानीं मम मनः भयेन कम्पते। यदि इदानीम् अहं सन्मार्गं न अनुसरामि तर्हि ग्रामस्य किं, देशस्य एव अनिष्टं भवेत्। अद्य आरभ्य अहं भवतीम् अनुसरामि। भवती यथा वदति तथा आचरामि।"

वासन्त्यां जातं परिवर्तनं दृष्ट्वा वज्रगुप्तः सन्तुष्टः। पद्मावतीं कठोरहृदयां ज्ञात्वा अपि तस्याम् अखण्डं प्रेम प्रदर्शितवान् इति कृत्वा सः चन्द्रकान्तविषये अपि सन्तुष्टः अभवत्। अनन्तरं वासन्तीचन्द्रकान्तयोः विवाहं कारितवान्।

विवाहानन्तरं वासन्ती पद्मावत्याः मूर्तिं स्वयं निर्मापितवती। रामपुरे प्रतिष्ठापितवती च।

'वासन्त्यां यत् परिवर्तनं दृष्टं तत्र चन्द्रकान्तः एव कारणम्' इति जानन्तः ग्रामीणाः परस्परं वदन्ति स्म- "चन्द्रकान्तः न केवलं मनुष्याणां प्रतिमां निर्माति, अपितु प्रतिमासु अपि जीवं पूरयित्वा ताः मनुष्यान् करोति" इति।






# लवणकषायः

पूर्वं कस्मिंश्चित् गृहे कश्चन गृहस्थः आसीत्। तस्य एकः पुत्रः एका पुत्री च। कालान्तरे पुत्रस्य विवाहः जातः। स्नुषा गृहम् आगता। इदानीं तदगृहे स्त्रियः तिस्रः सञ्जाताः।

यदा पिता पुत्रश्च गृहात् निर्गच्छतः तदा गृहे केवलं स्त्रियः एव भवन्ति स्म। तदा ता सां मध्ये केनापि क्षुल्लककारणेन कलहः प्रवर्तते स्म।

अन्यच्च स्नुषा नवीनतया एतत् गृहम् आगता किल ?। तस्याः मातृगृहस्य आचाराः व्यवहाराः च भिन्नाः आसन्। अतः सा पदे पदे क्लेशम् अनुभवति स्म। स्नुषा पाठनीया इति विषये मातापुत्र्योः निरन्तरः प्रयत्नः प्रचलति स्म एव। 'एषा स्नुषा किमपि न जानाति। उक्तम् एव बहुवारं पुनर्वक्तव्यम्' इति तयोः आक्षेपः सर्वदा श्रूयते स्म।

एवं स्थिते कदाचित् गृहस्थस्य श्यालः तद्गृहम् आगतवान्। सहोदरः आगतः इति गृहस्वामिन्याः महान् सन्तोषः। अतिथि-सत्कारः सम्यक् करणीयः इति चिन्तयन्ती सा विशेषश्रद्धया कार्यम् आरब्धवती।

जलम् आनेतुं कूपं प्रति प्रस्थिता सा वस्त्रं क्षालयन्तीं स्नुषां दूरतः एव उक्तवती- "अये, चुल्लेः उपरि शाकानि स्थापितानि सन्ति। यदा तानि पक्वानि भवन्ति तदा लवणं योजयतु। पूर्वं स्थाप्यते चेत् तानि पक्वानि न भवेयुः। अहं उद्यानसस्यानि सिञ्चयित्वा ततः एव जलम् आनयामि" इति।

वस्त्रक्षालनानन्तरं स्नुषा पाकगृहं प्रविष्टवती। शाकानि पक्वानि इति ज्ञात्वा पर्याप्तं लवणं योजितवती। वस्त्राणि आतपे स्थापयितुं बहिः प्रस्थिता च।

गृहस्वामिन्या यत् उच्चैः उक्तं तत् वचनं पुत्री अपि श्रुतवती आसीत्। सा चिन्तितवती-

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

"मात्रा माम् उद्दिश्य एव एवम् आदिष्टम्" इति। अतः सा किञ्चित्कालानन्तरं पाकशालां प्रविष्टवती। 'अद्य पाकः उत्कृष्टः भवेत्, यतः मया योग्यप्रमाणेन लवणं योजितम् अस्ति' इति चिन्तयन्ती पात्रे लवणं स्थापितवती, अनन्तरं स्वकार्यार्थं प्रस्थिता च।

अत्रान्तरे गृहस्वामिनी- "मया यद्यपि उच्चैः एव उक्तम्, तथापि सा श्रुतवती वा न वा इति अहं न जाने। पाके यदि समये लवणं न योज्येत तर्हि स्वादः नश्यति। मम सहोदरः चिरात् आगतः। अतः पाकः उत्तमः भवेत्" इति चिन्तयन्ती त्वरया गृहं प्रत्यागतवती। तत्समये पाकशालायां काऽपि न आसीत्। 'मया यथा चिन्तितं तथैव जातम्। वराकी लवणं स्थापयितुं विस्मृतवती' इति चिन्तयित्वा मुष्टिमितं लवणं योजितवती। पुनः स्वकार्यार्थं गतवती।

मध्याह्ने सर्वे भोजनार्थं उपविष्टाः। अतिथिः श्यालः अन्ने क्वथितं योजयित्वा किञ्चित् मुखे स्थापितवान्। "किमिदम्? क्वथिते लवणं एव न स्थापितं वा ?" इति पृष्टवान् च।

"किमर्थम् एवं वदति? मया स्वयं लवणं स्थापितम्" इति उक्तवती गृहस्वामिनी।

"मया अविस्मृत्य स्थापितम्। प्रायः मातुलः अधिकं लवणं खादति इति मन्ये" इति उक्तवती पुत्री।

तदा स्नुषा श्वश्रूम् उक्तवती- "भवत्या यदा दूरतः एव उक्तं तदा एव अहं पाकशालां प्रविष्टवती। लवणं स्थापयित्वा एव बहिः गतवती" इति।

"ओ हो, इदानीं कारणं ज्ञातम्। तिसृभिः अपि लवणं स्थापितं चेत् किम् अन्यत् भवेत्? अद्य क्वथितं न कृतं, अपि तु लवणकषायः कृतः" इति हसन् उक्तवान् श्यालः।

"अस्माकं गृहे ऐकमत्यं सम्यक् अस्ति इति मया अद्य ज्ञातम्। इतः परम् एकं कार्यं एका एव करोतु। मध्ये अन्यस्याः प्रवेशः मास्तु" इति गर्जितवान् गृहस्वामी।






वज्राङ्गः ब्रह्मणः अनुग्रहेण तारकासुरं पुत्ररूपेण प्राप्तवान्। तारकासुरः तपसा ब्रह्माणं सन्तोष्य- ''शिवपुत्रेण विना अन्येन मम मरणं न भवेत्'' इति वरं प्राप्तवान्। त्रिलोकविजयिनीं शक्तिम् अपि प्राप्तवान्। अनन्तरं युद्धेन इन्द्रं जितवान्। किन्तु ब्रह्मणः वचनं परिपालयन् सः स्वर्गाधिकारं इन्द्राय दत्तवान्। किन्तु इन्द्रं स्वाधीने एव स्थापितवान्।

'यावत् शिवस्य पुत्रः न भवति तावत् तारकासुरस्य नाशः न शक्यः। अतः शिवपार्वत्योः विवाहः यथा भवेत् तथा प्रयत्नः करणीयः' इति देवैः निश्चितम्। शिवस्य मनःपरिवर्तनार्थं ते मन्मथं नियोजितवन्तः। एतदङ्गीकृत्य मन्मथः शिवसमीपं गतवान्।

मन्मथप्रभावेण वनं विकसितम् अभवत्। वृक्षाः अकाले फलिताः।

मन्मथः स्वपुष्पबाणैः ईश्वरं प्रहृतवान्। पञ्चमेन बाणेन ईश्वरस्य हृदये विकारः उत्पन्नः। एतेन कुपितः सः तृतीयं नेत्रम् उद्घाटितवान्। मन्मथः भस्मीभूतः।

पत्युः मरणेन दुःखिता रतीदेवी शिवम् प्रार्थितवती- ''मम पतिः निरपराधी। देवानाम् आदेशेन सः भवंतः उपरि पुष्पबाणान् प्रयुक्तवान्। जगतः हितार्थं सः एवं कृतवान्। निरपराधिनं मम पतिम् उज्जीवयतु। पतिभिक्षया माम् अनुगृह्णातु'' इति।

तदा शिवः उक्तवान्- ''पूर्वं भवत्याः पतिः पुष्पबाणैः ब्रह्माणं प्रहृत्य पुत्रीविषयकं

५. पार्वत्याः तपश्चर्या।



मोहम् उत्पादितवान् आसीत्। तेन च शापं प्राप्तवान्। तस्य शापस्य प्रभावेण इदानीं सः भस्मीभूतः। भवत्याः पातिव्रत्येन अहं तुष्टः अस्मि। अतः अहं तम् उज्जीवयामि। किन्तु सः जनानां दृष्ट्या देहरहितः तिष्ठति'' इति।

कामवशात् शिवस्य हृदये विकारः उत्पन्नः। तत्परिणामतः सः तपः त्यक्त्वा कैलासं गतवान्। क्रमशः 'पार्वती परिणेतव्या' इति भावना तस्य मनसि स्पष्टरूपतां प्राप्ता।

शिवस्य नेत्राग्निना दग्धं मन्मथं पार्वती दृष्टवती आसीत्। अतः भीता सा ततः धावन्ती गृहं प्राप्तवती। मेना हिमवान् च सान्त्वनं कृत्वा तस्याः भीतिं निवारितवन्तौ- "यत् प्रवृत्तं तत् हिताय एव। शिवः सद्यः एव भवतीं परिणेष्यति, चिन्ता मास्तु'' इति।

शिवस्य व्यवहारेण पार्वती भीता आसीत्। किन्तु शिवविषये पार्वत्याः प्रीतिः पूर्ववत् एव अखण्डम् आसीत्। सा सर्वदा सर्वत्र च शिवं पश्यति। शिववियोगेन तप्ता प्रतिक्षणं पीडाम् अनुभवति च।

एकदा हिमवतः गृहम् आगतः नारदः अपि पार्वतीं सान्त्वनवचनानि उक्त्वा शिव-पञ्चाक्षरीमन्त्रम् उपदिष्टवान्। "एतस्य मन्त्रस्य जपेन भवत्याः हितं सिध्यति। भवत्याः सर्वाः कामनाः सिध्यन्ति च'' इति उक्तवान् च।

पार्वती इष्टसिध्यर्थं तपसि लीना जाता। शृङ्गतीर्थे निवसन्ती सा निरन्तरं शिवपञ्चाक्षरी-मन्त्रस्य जपं कृतवती। घोरं तपः आचरन्ती कन्दमूलादिकम् आहारं किं, पर्णखादनम् अपि त्यक्तवती। तेन च तस्याः नाम 'अपर्णा' इति प्रसिद्धम् अभवत्।

'कदाचित् वा शिवः मां परिणेष्यति एव' इति पार्वत्याः दृढः निश्चयः। अतः सा गृहम् आगन्तुं प्रार्थयतोः मातापित्रोः वचनानि अपि तिरस्कृतवती। 'तपोबलेन अहं शिवं पतिरूपेण प्राप्नोमि एव' इति सा उक्तवती।

किन्तु प्रतिदिनं दुर्बलायमानां पुत्रीं दृष्ट्वा मातापित्रोः महान् खेदः। अनिष्टस्य आशङ्कया तौ भीतौ। भीत्या कम्पमानेन स्वरेण हिमवान् उक्तवान्- "पुत्रि! आहारम् अपि त्यक्त्वा

केन वा उद्देशेन तपः आचरति ? कामदेवं भस्मीकुर्वतः शिवस्य विषये इतोऽपि विश्वासः वा ? स तु विरागी क्रोधशीलः च। तस्य प्राप्त्यै प्रयत्नः अनुचितः एव। उत्तिष्ठतु। किमर्थं वृथा आत्मक्लेशः ? गृहं गच्छावः तावत्'' इति।

तदा पार्वती उक्तवती- ''पितः ! पूर्वं भवता एव मम शिवस्य च परिणयार्थं प्रयत्नः कृतः आसीत्। एकवारं मनसा अङ्गीकृतस्य विषये परिवर्तनं नास्ति एव। शिवः कदाचित् मां परिणेष्यति एव इति मम अन्तरङ्गं वदति। अतः अहं तपःकार्यं न त्यजामि एव'' इति।



अपरत्र शिवः अपि पार्वतीपरिणयविषये चिन्तामग्नः आसीत्। तत्सन्दर्भे ब्रह्मा इन्द्रः विष्णुः च शिवसमीपम् आगतवन्तः।

स्वागतानन्तरं ते उक्तवन्तः- ''महानुभाव ! जगतः हितार्थं भवान् किमर्थं वा पार्वतीं न परिणेष्यति ? 'भवतः पुत्रेण एव मरणं भवतु' इति तारकासुरः वरं प्राप्तवान् अस्ति। तस्य मारणं विना जगतः सुखं नास्ति'' इति।

एतत् श्रुत्वा शिवः सन्तुष्टः। तथापि सः उक्तवान्- ''विवाहेन मम तपसः विघ्नः भवति। कामस्य पुष्पबाणानां सम्मुखीकरणं सुलभं, किन्तु स्त्रीणां नयनबाणानां सम्मुखीकरणं न शक्यम्। अतः चिन्तयामि यत् पार्वतीविवाहापेक्षया तपः एव श्रेष्ठम् इति।''

तदा ब्रह्मा उक्तवान्- ''महानुभाव ! गृहस्थाश्रमः सर्वोत्तमः। भवान् गृहस्थः भूत्वा राजयोगिजीवनं यापयतु। एतेन भवतः लोकस्य च हितं सिध्यति। अविवाहितस्य समाजे न तथा गौरवम्। विवाहानन्तरम् अपि तपसः अवकाशः अस्ति एव। विवाहिताः ब्रह्मर्षयः कियन्तः न सन्ति ?'' इति।

शिवः तेषां प्रार्थनाम् अङ्गीकृतवान्। देवाः सन्तोषेण ततः निर्गताः।

'पार्वती स्वस्मिन् स्निह्यति' इति शिवः जानाति। तथापि तां परीक्षितुम् इच्छन् सः वटुरूपेण पार्वत्याः समीपं गतवान्। वटोः मुखकान्तिं दृष्ट्वा पार्वती चिन्तितवती- 'एषः कश्चन श्रेष्ठः पुरुषः' इति। अतः अर्घ्यपाद्या-



दिभिः तं सत्कृत्य पृष्टवती- "महात्मन्! भवान् कः? भवतः आगमनकारणम् अहं ज्ञातुं शक्नोमि वा?" इति।

"अहं ब्रह्मवंशीयः। जगतः हितम् इच्छन् अहं सर्वत्र अटामि। भवती का? केन उद्देशेन कोमलाङ्गी भवती कठोरे तपसि निरता अस्ति? इत्यादिकम् अहं ज्ञातुम् इच्छामि" इति शिवः उक्तवान्।

"अहं मेनाहिमवतोः पुत्री। मम नाम पार्वती। ईश्वरः यदा कैलासे तपोमग्नः आसीत् तदा अहं तस्य परिचर्यां कुर्वती आसम्। एकदा कामदेवः पुष्पबाणैः तं प्रहृतवान्। तदा कुपितः शिवः स्वतृतीय-नेत्राग्निना तं दग्धवान्। इदानीम् अहं नारदस्य मन्त्रोपदेशानुसारं शिवपञ्चाक्षरीं जपन्ती शिवप्राप्त्यै तपसि निरता अस्मि। अद्यावधि साफल्यस्य चिह्नं न दृष्टम्। अहं प्रायः शिवस्य अनुग्रहार्थम् अनर्हा इति भाति। इतः परं किञ्चित्कालम् अहं प्रयत्नं करोमि। तदा अपि अनुग्रहः न प्राप्तः चेत् अग्निप्रवेशः एव शरणं मम" इति खेदेन उक्तवती पार्वती।

तदा वटुः उक्तवान्- "भवती महतीं मूर्खताम् आचरन्ती अस्ति। ईश्वरः तु विरागी संन्यासी च। सः कथं वा भवतीं परिणयेत्? तपः त्यक्त्वा गृहं गच्छतु। देवेषु उत्तमं कञ्चित् परिणीय सुखं जीवतु" इति।

"भवतः सूचनार्थं धन्यवादाः। किन्तु मम निश्चयः दृढः अविचलः च। अस्मिन् जन्मनि यदि अहं परिणेष्यामि तर्हि शिवम् एव। अन्ये सर्वे मम सहोदरतुल्याः। अन्यं पुरुषं स्वप्ने अपि न अभिलषामि" इति उक्तवती पार्वती।

"का इयं मूर्खता भवत्याः? शिवः जन्मना दरिद्रः। मृगचर्माणि एव तस्य वस्त्राणि। भूतपिशाचादिभिः तस्य सहवासः। श्मशाने तस्य वासः। भस्म एव तदीयः अङ्गरागः। वृद्धः वृषभः तस्य वाहनम्। भिक्षया यत् प्राप्तं तेन जीवननिर्वहणम्। एतादृशं विलक्षणं परिणीय भवती किं वा सुखं प्राप्स्यति? विवाहानन्तरं सुखं स्वप्ने अपि दुर्लभः भवि-

ष्यति। रात्रौ दृष्टे कूपे दिने पतनं न बुद्धिमतां लक्षणम्" इति वटुवेषधारी शिवः उक्तवान्।

तदा कोपम् आत्मनि निरोद्धुम् अशक्ता पार्वती "अरे वटो! भवान् कश्चन कपटवेषधारी। भवान् ज्ञानी इति मम भ्रमः आसीत्। जगदीश्वरस्य शिवस्य निन्दां करोति किल भवान्? देवाधिदेवाः अपि तं भक्त्या नमस्कुर्वन्ति इति न जानाति वा भवान्? शिवनिन्दाम् अहं श्रोतुं न इच्छामि" इति उक्त्वा हस्ताभ्यां कर्णयोः पिधानं कृतवती। 'एतं प्रेषयतु' इति सखीं हस्तसङ्केतेन सूचितवती च।

तदा शिवः निजस्वरूपेण प्रत्यक्षीभूय कोपाविष्टायाः पार्वत्याः हस्तं स्वहस्तेन गृहीत्वा उक्तवान्- "पार्वति! भवत्याः मनोदार्ढ्यं परीक्षितुम् इच्छन् अहं वटुवेषेण आगतवान्। अत्र पश्यतु, अहं शिवः उपस्थितः अस्मि। भवत्याः विरहेण अहं तप्तः अस्मि। अद्य आरभ्य अहं भवत्याः दासः" इति।

प्रत्यक्षं शिवं दृष्ट्वा पार्वती अतीव सन्तुष्टा लज्जिता च। सा क्षमायाचनपूर्वकं शिवम् उक्तवती- "दीर्घकालिकस्य तपसः फलम् अद्य मया प्राप्तम्। सफलाः मम मनोरथाः। विवाहविषये भवान् मम मातापित्रोः अनुमतिं प्राप्नोतु" इति।



अनन्तरं पार्वती शिवं प्रणम्य स्वसखीभिः सह गृहं प्रत्यागतवती। पार्वत्याः सखीद्वारा प्रवृत्तम् सर्वं श्रुत्वा मेना हिमवान् च सन्तुष्टौ। पार्वत्याः विवाहार्थं तौ सिद्धताम् आरब्धवन्तौ।

पार्वत्याः विवाहविषये अनुरक्तः शिवः कैलासं प्रत्यागतवान्। 'विवाहमुहूर्तादिनिश्चयार्थं सप्तर्षयः प्रार्थनीयाः' इति सः निश्चितवान्। अतः सः सप्तर्षीन् आनेतुम् नन्दिकेश्वरं प्रेषितवान्।

तद्दिने एव कैलासात् प्रस्थितः नन्दिकेश्वरः सप्तर्षिभिः सह प्रत्यागतवान्।

सप्तर्षयः शिवस्य दर्शनेन आत्मानं धन्यं मन्यमानाः भक्तिपूर्वकम् उक्तवन्तः- "महादेव! अस्माभिः किं करणीयम्? किमर्थम् अस्मान्



आहूतवान्? आज्ञादानेन अस्मान् अनुगृह्णातु भवान्'' इति ।

''महर्षयः ! अहम् इदानीं गृहस्थजीवने आसक्तः अस्मि। हिमवतः पुत्रीं पार्वतीं परिणेतुम् इच्छामि च । अतः भवन्तः हिमवतः गृहं गत्वा विवाहप्रस्तावं कुर्वन्तु । हिमवतः अनुमतिं प्राप्य योग्यमुहूर्तस्य निश्चयम् अपि कुर्वन्तु । अस्मिन् विवाहकार्ये भवन्तः एव प्रमुखाः मार्गदर्शकाः'' इति शिवः सप्तर्षीन् उक्तवान् ।

सप्तर्षयः सन्तोषेण शिवस्य प्रार्थनाम् अङ्गीकृतवन्तः । तत्क्षणे हिमवतः गृहं प्रति प्रस्थिताः च ।

हिमवान् आदरपूर्वकं सप्तर्षीन् सत्कृत्य उक्तवान्- ''महर्षयः ! भवताम् आगमनेन मम गृहं पवित्रम् जातम् । आगमनकारणं निवेद्य अस्मान् अनुगृह्णन्तु । भवतां सेवार्थं वयं सर्वे कटिबद्धाः स्मः'' इति ।

सप्तर्षयः उक्तवन्तः- ''हिमालय ! भवान् भाग्यपुरुषः । साक्षात् जगदीश्वरी एव भवतः पुत्री अस्ति । इदानीं परमेश्वरः शिवः भवतः पुत्रीं परिणेतुम् इच्छति । एतेन विवाहेन भवतः कीर्तिः त्रिषु लोकेषु विख्याता भविष्यति । भवान् जगदीश्वरस्य श्वशुरः भविष्यति'' इति ।

हिमवान् गम्भीरस्वरेण उक्तवान्- ''मुनिवर्याः ! वयम् अपि शिवपार्वत्योः विवाहार्थं सङ्कल्पितवन्तः आस्म । किन्तु ह्यः कश्चन भिक्षुः अस्माकं गृहम् आगतवान् । 'शिवः निर्धनः, न राज्यं, न ऐश्वर्यम्, न सुखभोगसाधनानि, श्मशानवासिनः तस्य आभरणानि सर्पाः एव, स्वकीयं गृहं तस्य नास्ति, पिशाचाः एव तस्य अनुयायिनः, कपाले तस्य भोजनम्' इति तेन उक्तम् । एतत्सर्वं श्रुतवताम् अस्माकं मनः इदानीं परिवृत्तम् । इदानीं वयं शिवाय पार्वतीं दातुं न इच्छामः'' इति ।

हिमवतः वचनेन सप्तर्षयः आश्चर्यचकिताः जाताः । कोपं प्रकटयन्तः ते उक्तवन्तः- ''सः भिक्षुः वस्तुतः कश्चन दुष्टः एव । शिवपार्वत्योः विवाहं निरोद्धुम् इच्छन् सः एवम् आचरति इति भाति । भवतः पुत्री पराशक्त्याः अंशेन

जाता इति भवान् मा विस्मरतु। शिवस्य परिणयार्थम् एव तया भवतः गृहे जन्म प्राप्तम् अस्ति'' इति।

एतत्सन्दर्भे महर्षिः वसिष्ठः मेनां हिमवन्तम् च उद्दिश्य अनरण्यनामकस्य महाराजस्य कथाम् उक्तवान्–

"इन्द्रसावर्णिनामकस्य चतुर्दशमनोः वंशे राजा अनरण्यः जन्म प्राप्तवान्। सः चक्रवर्ती। रुचिः नाम कश्चन तपस्वी तस्य पुरोहितः आसीत्।

महाराजस्य अनरण्यस्य पञ्च पत्न्यः, शतं पुत्राः च। तस्य एका पुत्री अपि आसीत्। तस्याः नाम पद्मावती इति। पद्मावती असाधारणरूपवती। यदा सा प्राप्तवयस्का जाता तदा अनरण्यः तस्याः विवाहार्थं सुन्दरं योग्यं राजकुमारम् अन्वेष्टुम् आरब्धवान्।

एकदा पद्मावती स्वसखीभिः सह स्नानार्थं नदीं गतवती। तदा पिप्पलादः नाम ऋषिः स्नानार्थं ताम् एव नदीम् आगतवान्। पिप्पलादः न साधारणः। भृगुवंशीयः सः महामुनेः दधीचेः पुत्रः।

पिप्पलादः पद्मावत्याः सौन्दर्यं दृष्ट्वा आकृष्टः। सः साक्षात् गत्वा महाराजम् अनरण्यं दृष्टवान्। पद्मावतीपरिणयस्य इच्छां प्रकटीकृतवान् च।

मुनेः पिप्पलादस्य वचनं श्रुत्वा अनरण्यः अवाक् जातः। सः इच्छति स्म यत् रतिसदृशी एषा पुत्री मन्मथसदृशाय राजकुमाराय दातव्या इति। यदि तेन पिप्पलादस्य प्रार्थना तिरस्क्रियेत तर्हि सः मुनिः शापेन कुलम् एव नाशयेत्। अतः अनरण्यस्य आशा भग्ना अभवत्। आघातेन सः हतप्रभः अभवत्। किंकर्तव्यतामूढः भूत्वा मौनं स्थितवान् च।

राजसभायां मौनम् आवृतम् आसीत्। इतः पूर्वं कदापि एतादृशं वातावरणं न दृष्टम् आसीत्। तदा राजपुरोहिताः मन्त्रिणः च कञ्चित् उपायं सूचितवन्तः।

(अनुवर्तते)



# सर्वज्ञः

कस्यचित् महाराजस्य समीपे कश्चित् मधावी महामन्त्री आसीत्। सः वार्धक्यकारणतः पदवीतः निवृत्तिं प्राप्तुम् अभिलषितवान्। तदा राजा समर्थम् अन्यं तत्स्थाने योजयितुं एतं वृद्धं मन्त्रिणम् एव सूचितवान्।

राज्ये एतद्विषये प्रकटनं कृतम्। बहवः मन्त्रिस्थानम् अभिलषन्तः आगताः। किन्तु द्वौ विना अन्ये सर्वे परीक्षायां अनुत्तीर्णाः।

उत्तीर्णौ द्वौ तु सर्वसमर्थौ। मन्त्रिस्थानार्थं तु एकः एव अपेक्षितः। अतः मन्त्री काचित् परीक्षाम् आयोजितवान्।

उभौ अपि रत्नखचितसिंहासनस्य समीपं नीत्वा उक्तवान्- "भवन्तौ पूर्वं कृतासु परीक्षासु समानतया उत्तीर्णौ। एषा अन्तिमा परीक्षा। सर्वं जानामि इति यस्य आत्मविश्वासः अस्ति सः तस्मिन् आसने उपविशतु। तदर्थं क्षणमात्रस्य अवकाशः" इति।

तत्क्षणे एव एकः गत्वा तस्मिन् रत्नखचिते सिंहासने उपविष्टः। अन्यः तु तत्रैव अविचलतया स्थितः आसीत्।

वृद्धः मन्त्री द्वितीयं महाराजसमीपं नीत्वा- 'एतं मन्त्रिस्थाने नियोजयितुम् अर्हति भवान्' इति निवेदितवान्।





# चोरः धर्मगुरुः च

पूर्वम् इस्फहान् नगरे कमलुद्दीन् नामकः कश्चन वस्त्रवणिक् आसीत्। गृहात् किञ्चित् दूरे तस्य आपणः आसीत्। प्रातः गृहात् प्रस्थितः सः रात्रौ आपणं पिधाय एव गृहं प्रत्यागच्छति स्म।

एकदा रात्रौ सः गृहं प्रस्थितः आसीत्। तस्य हस्ते तद्दिने सम्पादितस्य धनस्य स्यूतः आसीत्।

कमलुद्दीन् किञ्चिद्दूरं राजमार्गे गत्वा अनन्तरम् उपमार्गम् अनुसृतवान्। तस्मिन् मार्गे जनसञ्चारः न्यूनः आसीत्। तदा कश्चन चोरः अकस्मात् आगत्य कमलुद्दीनस्य हस्ते विद्यमानं धनस्यूतम् अपहृत्य पलायितवान्।

दिग्भ्रान्तः कमलुद्दीन् 'चोरः चोरः' इति उच्चैः आक्रोशनं कृतवान्। तदा तत्रत्याः केचन चोरम् अनुसृत्य धावन्तः तं दृढं गृहीतवन्तः।

कमलुद्दीन् स्वकीयं धनं प्रतिप्राप्तवान्। ते जनाः तं चोरं नगररक्षकस्य समीपं नीतवन्तः। नगररक्षकः स्वभावतः महाकोपशीलः। सः चोरान् अपराधिनः च निर्दयेन दण्डयति स्म। युवकः चोरः तस्य पादयोः पतित्वा रोदनं कुर्वन् क्षमयाचनं कृतवान्।

किन्तु नगररक्षकः कोपेन- "कियत् धैर्यं भवतः? मयि नगररक्षणे क्रियमाणे चौर्यं करोति वा?" इति वदन् बलेन एकं पादप्रहारं दत्तवान्।

एतेन चोरः मार्गे पतितः। एतस्य अवकाशस्य उपयोगं स्वीकुर्वन् सः उत्थाय ततः पलायितः। तं ग्रहीतुम् केचन भटाः अपि धावितवन्तः। चोरस्तु वक्रमार्गेण धावन्, कोणेषु प्रविशन् नगरसीमाम् अतिक्रान्तवान्। भटाः अपि तम् अनुसृतवन्तः।

"अरेबिया कथा"



अग्रे धावन् चोरः पर्वतसमीपम् आगतवान्। तत्र तेन कस्याञ्चित् गुहायाम् दीपप्रकाशः दृष्टः। सा च गुहा कस्यचित् धर्मगुरोः। चोरः झटिति तां गुहां प्रविष्टवान्।

यदा सः गुहां प्रविष्टः तदा धर्मगुरुः तत्र न आसीत्। धर्मगुरोः पीठे एकम् उत्तरीयम् आसीत्। चोरः तद् उत्तरीयं धृत्वा प्रार्थनामग्नः इव उपविष्टवान्।

अल्पे एव काले भटाः तत्र आगतवन्तः। "श्रीमन्! अत्र आगतः कोऽपि चोरः दृष्टः वा?" इति विनयेन पृष्टवन्तः।

चोरः गम्भीरः सन् नैव इति भावं शिरसः चालनेन सूचितवान्। "क्षम्यताम्, प्रार्थनासमये विघ्नः उत्पादितः अस्माभिः" इति उक्त्वा रक्षकभटाः तं नमस्कृत्य ततः गतवन्तः।

चोरः इदानीं समाधानेन दीर्घं श्वासं त्यक्तवान्। भटैः कृतं नमस्कारं स्मृतवतः तस्य मनसि एव हासः। अपरक्षणे अन्यः विचारः उत्पन्नः- "धर्मगुरोः अभिनयेन पर्वतोपमा आपत् क्षणमात्रेण निवृत्तः। धर्मगुरोः विषये सर्वेषाम् आदरभावः अस्ति एव। एवं तर्हि अहं वस्तुतः धर्मगुरुः एव भवामि चेत् किं भवेत्? जनानां विशेषादरं प्राप्नोमि किल?" इति।

अत्रान्तरे तद्गुहानिवासी धर्मगुरुः तत्र आगतः। चोरः तस्य पादयोः पतित्वा इदानीं यत् संवृत्तं तत् सर्वं निवेदितवान्। तदनन्तरं सः धर्मगुरुं प्रार्थितवान्- "महात्मन्! अहं अनाथः। अहं भवतः सेवां कर्तुम् इच्छामि। कृपया अनुग्रहीतव्यः" इति।

दयालुः धर्मगुरुः तदीयां प्रार्थनां अङ्गीकृतवान्। तं स्वशिष्यत्वेन स्वीकृतवान्। एतेन चोरः निश्चिन्तः जातः।

तद्दिनात् आरभ्य चोरः वृद्धस्य धर्मगुरोः सेवां श्रद्धया कृतवान्। तदीयानि उपदेशवचनानि आसक्त्या श्रुतवान्। क्रमेण तस्मिन् परिवर्तनं जातम्। स्वभावः कोमलः जातः। सः सज्जनरूपेण परिवृत्तः। केषाञ्चित् वर्षाणाम् अनन्तरं वृद्धः धर्मगुरुः दिवङ्गतः।

चोरः एव तस्य उत्तराधिकारित्वेन धर्मगुरुः भूत्वा धर्मबोधनं कुर्वन् यथेष्टं कीर्तिं सम्पादितवान् ।

एकदा एषः भक्तानां अनुरोधेन नगरं आगतवान् । नागरिकाः तं सगौरवं स्वागतीकृतवन्तः । तदनन्तरं ते धर्मगुरोः प्रवचनार्थं व्यवस्थां कृतवन्तः । तत्र ते स्वमत्यनुसारं धार्मिकसमस्याः उपस्थापितवन्तः । चोरः धर्मगुरुः तु योग्यैः उत्तरैः तेषां सन्देहान् निवारितवान् ।

अत्रान्तरे कश्चित् वृद्धः आगत्य भक्त्या तस्य पादयोः पतितवान् । अनन्तरं सः गद्गदस्वरेण उक्तवान् च- "साधुवर ! इतः परं मम का गतिः ? उत्तमगतिः तु नास्ति एव, यतः अहं भवान् इव उत्तमकार्याणि न कृतवान् । बहुकालपर्यन्तम् अहं पूर्वं अस्य नगरस्य रक्षकप्रमुखः आसम् । तदा प्रतिदिनं बहून् चोरान् अपराधिनः च ताडितवान् । निर्दयं दण्डितवान् च । एवं स्थिते कथं वा मम उत्तमगतिः लभ्येत" इति ।

"सहोदर ! किमर्थम् अमङ्गलं चिन्तयति ? यदि देवस्य अनुग्रहः अस्ति तर्हि किं वा न सम्भवति ? पूर्वं कदाचित् अहं भवतः पादयोः पतित्वा प्रार्थितवान् । भवान् मां पादप्रहारेण निवारितवान् । किन्तु सः एव भवान् अद्य भक्त्या मम पादौ प्रणमति । दैवगतिः विचित्रा । यदि चोरः देवस्य प्रियः भवितुं शक्नोति, तर्हि चोरदण्डकः किमर्थं वा देवप्रियः भवितुं न अर्हति ?" इति सः धर्मगुरुः मन्दहासपूर्वकम् उक्तवान् । तस्य वचनं श्रुत्वा वृद्धः अतीव विस्मितः । तदा धर्मगुरुः एव पूर्वतनं वृत्तान्तम् आमूलाग्रं निवेदितवान् ।

एतत् श्रुत्वा नगररक्षकः अतीव सन्तुष्टः । सः धर्मगुरोः पादौ दृढं गृहीत्वा आनन्दाश्रुभिः तदीयं पादौ क्षालितवान् ।



# चतुष्पादिनः मीनाः

१७४१तमे वत्सरे रशियादेशस्य सेण्ट् पीटर् नामिका नौका बेरिङ्गद्वीपस्य तीरे भग्ना। तदा केचन प्राणान् रक्षन्तः तीरं प्राप्तवन्तः। तरणसमये तैः 'सी अटर्स्' नामकाः जलचराः सहस्र-सङ्ख्यया दृष्टाः। यावत् ते तस्मिन् द्वीपे स्थिताः तावत् आहारार्थं तेषां जलचराणां मारणं कृतवन्तः। तेषां चर्माणि विक्रीय यथेष्टं धनं सम्पादितवन्तः च। ततः आरभ्य एतेषाम् आटर्स् मीनानां मारणं दिने दिने प्रवृद्धम्। प्रशान्तसागरे ये बहुसङ्ख्यया दृश्यन्ते स्म ते कालान्तरे अदृश्यतां गताः। १९१०तमे वत्सरे अमेरिकादेशे १९१५तमे वत्सरे केषुचित् अन्यदेशेषु च एतेषां जलचराणां जातेः रक्षणार्थं मारणप्रतिबन्धकनियमः व्यवहारे आनीतः।

यस्मिन् समुद्रप्रदेशे शैवालाः पर्याप्तमात्रेण भवन्ति, यत्र च गभीरता न भवति तत्र ते समूहरूपेण निवसन्ति। एतेषां सी अटर्स् मीनानां दैर्घ्यं एकमीटरात्मकम्। पुच्छस्य दैर्घ्यं च पादोनमीटरात्मकम्। महाशिरस्कानां ह्रस्वकण्ठानां लघुकर्णानां लघुनेत्राणां च एतेषाम् अग्रिमपादौ पृष्ठपादापेक्षया ह्रस्वौ। मुखे श्मश्रुरोमाणि सान्द्रं भवन्ति। अङ्गुलीनां मध्ये चर्मपटलं भवति।

एते मीनाः समुद्रप्रवाहात् आत्मानं रक्षन्तः शैवालानां मध्ये आत्मानं निगूह्य अधोमुखतया उन्मुखतया च जले तरणं कुर्वन्ति। एवमेव एते समूहरूपेण निद्रां कुर्वन्ति। निद्रासमये तेषु एकः रक्षणार्थं जागरितः तिष्ठति। निद्रातः उत्थाय समुद्रतलं गत्वा कर्कटकान् लघुमीनान् च खादन्ति। शुक्तिमध्ये स्थितान् मीनान् खादितुम् इच्छन्तः एते समुद्रतलतः शिलाः आनीय अग्रिमपादेन गृहीत्वा अन्यपादद्वयसाहाय्येन शिलया शुक्तिं घट्टयित्वा अन्तस्थान् मीनान् खादन्ति।

वर्षद्वये एकवारं एते सन्तानोत्पत्त्यर्थं भूमिम् आगच्छन्ति। एते प्राणिनः सहजीवनं शान्तिं च विशेषतया इच्छन्ति। केषुचित् विषयेषु एते मीनाः मनुष्यैः समाः सन्ति।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां सप्टम्बर-८५ मासे प्रकटयिष्यामः।**





❀उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/– रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀शीर्षिकाः समपत्रे (पोस्ट्-क़ार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**
**७३/२', अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु–५६०००४**

---

**'मे' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–**

**प्रथमचित्रम्– अभ्यासे खलु तत्परता।**

**द्वितीयचित्रम्– अभ्यासेन तु निर्भीकाः।**

प्रेषकः– श्री ए. के. रथ, ५, २०तमः मार्गः, टि. नगर, मद्रास्-६१

---

# भवन्तः जानन्ति वा ? (उत्तराणि)

१. जान् बार्डीन् महोदयेन। २. फ्रैडरिक् शाङ्गेर महोदयेन।
३. निकोलाय् सेमिनेष्। ४. एवो डाग्रे। ५. फेरड्मेहोदयस्य गुरुः हम्फ्री डेनी।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः।

अङ्गरागः - Perfume
अन्वर्थनामकः - Befitting his name
अल्पतृप्तः - One who feels contented with what little he gets.
अवज्ञा - Insult
आणिः - Nail
आयोजयति - Organizes
उत्तरीयम् - Upper garment
उत्तोलितः - Hung
उपायनम् - Presentation
कपालः - Skull
कर्कटकः - Crab
कापालिका - Witch
कौशेयम् - Silk
क्वथितम् - A South Indian liquid food item.
खलीनः - Bridle
गभीरता - Depth
गोलकम् - A round object
चुल्लिः - Oven
जलचरः - Aquatic animal
जलस्रोतः - Fountain
तडागः - Tank
तोरणम् - Arch
द्विपटः - Bedspread
नाणकम् - Coin
निर्वाचनम् - Election
पर्णम् - Leaf
प्रतिमा - Statue
प्रसक्तिः - Chance
प्राङ्गणम् - Courtyard
भिक्षुः - Monk
भित्तिः - Wall
मातुलः - Maternal uncle
लेपकः - Painter
वटुः - A student of religion
वर्णलेपनम् Painting
विमाता - Stepmother
विलक्षणः · Peculiar
वृषभः - Ox
शरावः - Lid
शाकः - Vegetable
शुक्तिः - An oyster shell
शैवालः - Algae
श्यालः - Wife's brother
श्वश्रूः - Mother-in-law
समाहिता · Convinced
स्नुषा - Daughter-in-law

# परीक्षा

| | |
|---|---|
| पुत्री- अम्ब, पाकः सिद्धः वा ? | Mom, is food ready? |
| माता- आम्, व्याघरणं कृतं चेत् पाकः सिद्धः एव । | Yes, it is ready, only tempering is to be done. |
| पु - तर्हि सर्वान् आह्वयामि वा ? | Then, shall I ask them all to come in? |
| मा - आह्वयतु, तत्पूर्वं स्थालिकाः स्थापयित्वा चषकेषु जलं पूरयतु ! | Do call them, but first of all lay the plates and fill the glasses with water. |
| पु - अये सुरेश, गोविन्द, रमे, सर्वे भोजनार्थं आगच्छन्तु . . . । | Hi, Suresh, Govind, Rama, come in for food all of you. |
| मा - पितरम् अपि आह्वयतु । | Call your father also. |
| पु - सः इदानीम् अपि मुखक्षौरे मग्नः अस्ति । इतः परं स्नात्वा . . देवपूजां कृत्वा . . . । | He is taking his shave still. Then he has to have his bath and finish his pooja ....... ! |
| मा - स्नानं न समाप्तम् ! हन्त, अद्य तेन शीघ्रम् एव कार्यालयः गन्तव्यः । गत्वा सूचयतु भवती । | He hasn't had his bath yet! Done, he has to go to his office early today! Go and tell him. |
| पु - किमर्थं सूचयामि? तावदपि न स्मरति वा सः ? | Why should I? Can't he remember that much? |
| मा - सर्वदा प्रतिप्रश्नः एव भवत्याः । लघुकार्यम् उक्तं चेदपि भवत्याः असमाधानम् एव । | Everytime you argue! Can't you do even small jobs? |
| पु - सर्वदा भवती कार्याणि वदति एव । न कृतं चेत् महान् [illegible] . एवं च मम पठितुम् एव अवकाशः नास्ति । | You ask me to do some thing or the other all the time. If I don't do, you get angry. I don't get time at all to read! |
| मा - सत्यम् सत्यम् । कार्यं वदामि चेत् भवती पठनं स्मरति, घण्टाचतुष्टयं क्रीडति किल ? तदानीं किमर्थं पठनं न स्मरति ? | How true! When I ask you to do something you remember about your studies. You play for four hours! Why don't you think of your studies then? |
| पु - हन्त ! विलम्बः जातः । शीघ्रं परिवेशतु अम्ब ! | Enough, it is getting late mom! Please serve food. |

## मुफ्त ! मुफ्त !! मुफ्त !!!

"मेरी गोल्ड कवरिंग" ने सम्पूर्ण भारत में बहुत नाम कमाया है। हमारी कम्पनी भारत की सभी कम्पनियों में बहुत बड़ी है। पन्द्रह साल की कोशिश और तजुर्बे के बाद ही हमारी कम्पनी को पांच साल की गेरन्टी का माल बनाने में सफलता प्राप्त हुई है।




# MERI GOLD COVERING WORKS

P.O. BOX 1405, 14, RANGANATHAN STREET
T. NAGAR MADRAS-600 017 INDIA